# PREFACE

## To the First Edition

The object of the present works is to present in easy and up-to date manner the Etiology, Pathology and Symptomatology of Diseases from the standpoint of Ayurvedic Medicine Much doubt and discrepancy have arisen in the understanding of *Nidan* (the collective Ayurvedic name for these subjects) owing to the average teacher and student not clearly grasping the true spirit and import of the great Ayurvedic Samhitas of old, which —by the way—are properly studied only by a few scholars. Mine is an attempt to clear up the mist and to pave the way for a better understanding of the subject

The old work of *Madhavakar* of Bengal, known commonly as *Madhava Nidanam*, has held the field for several centuries. Though a valuable compilation by itself, it is in my humble opinion, not the most suitable work for the beginner as it is intended and employed to be It often lacks the perspicuity of the fine style of the Rishis and fails to grasp the necessity of the student's preliminary grounding in Anatomy and Physiology and in the great Theory of *Tridosha* on which all such works are based This theory, I may add, is perfectly compatible with the findings of modern Physiology without the necessity of distorting ancient Ayurvedic texts, though the average Ayurvedic teacher on one side and his foreign rival on the other have often failed to do justice to it Besides centuries have rolled by since the work of *Madhava* was written and the symptoms and manner of incidence of certain diseases have changed greatly Even novel diseases seem to have appeared Ingenious but futile attempts have often been made to explain them away by Ayurvedic practitioners who seem to forget that even *Charaka* and *Sushruta* had clearly grasped the possibility of new or 'undescribed' diseases All this I am afraid, has given rise to sophistry and lacks that liberal and laborious spirit of research which the sage writers of Ayurveda have always advocated

Becteriology too as a subject closely allied to Pathology, has been much neglected, even though a clear recognition of the share of microbes and animal parasites in the causation of certain diseases occurs in all the ancient Samhitas of Ayurveda In my opinion, we can no longer afford to ignore this important subject and the advances made in it by modern workers.

Keeping all these facts in view, I have endeavoured to write this work of *Nidanam* on modern lines The text is mainly that of the old Samhitas, though I have, where necessary, made a few additions in my own language to bring the subject fairly up-to-date For the selection and arrangement of the text and my new commentary I am alone responsible. In the latter, I have endeavoured to fill-in the gaps that exist and to correct erroneous impressions which have gained currency I have also attempted to explain and establish what might appear to be innovations to conservative scholars, by quoting plenty of evidences from ancient texts in support of my views. How far I have been successful in my efforts can be judged only by those who are capable of judging such a highly technical work impartially But I do venture to hope that my work will be found a useful companion to the student and teacher alike.

It may not be out of place here to add why I have written this work in Sanskrit It will readily appear to all thoghtful men that Sanskrit is yet the classical language of Ayurveda and it is the only medium through which all Ayurvedic practitioners of India can be approached

I crave the indulgence of my learned critics and readers for the errors which may have crept into my work I would be much obliged to them for pointing these out to me for the improvement of future editions, should I be fortunate enough to see them through the press

CALCUTTA, 1926 — GANANATH SEN

# PREFACE

## To the Fourth Edition

In editing the fourth edition of this work, I have taken some pains to make it more useful by certain additions and emendations I hope it will be as welcome as its predecessor. My best thanks are due to Ayurvedic scholars, both of the ancient and of the modern type, who have introduced this work as a text-book in many Ayurvedic Schools and Colleges of India.

CALCUTTA, *February 1950* — SUSHIL KUMAR SEN

१९३५ तमांग्लवर्षे नवेम्बरमासीय पञ्चमदिनादारभ्य दिनत्रयम्

# काशीहिन्दुविश्वविद्यालये सम्मिलितायाः

( निखिल भारतीय प्रधान वैद्यकाचार्यवृन्दभूयिष्ठायाः )

# त्रिदोषचर्चापरिषदो निर्णयाः ।*

---

१।२। सर्वायुर्वेदकार्यमूलभूतत्वात् त्रिदोषज्ञानं सप्रयोजनम् । वातादीना धातुत्वं दोषत्वं मलत्वं च अवस्थाविशेषेणाभिव्यज्यते । तच्च परस्पराऽविरुद्धम् ।

३।४। सर्वप्राकृतकर्मसु सकर्तृत्वनियामकत्वे सति स्थानव्ययेण दूषणशीलत्वं दोषत्वम्, तच्च वातादिषु त्रिष्वेव नान्यत्र । तस्मात् त्रय एव दोषा ।

५। शक्तेर्द्रव्याधिष्ठितत्वेन स्वतन्त्रावस्थित्यभावात् वातादीनां न शक्तित्वं किन्तु द्रव्यत्वमेव ।

६। पित्त-कफयोरवस्थाभेदेन स्थूलत्वं ( चक्षुरिन्द्रियग्राह्यत्वम् ), सूक्ष्मत्वं ( चक्षुरिन्द्रियाऽग्राह्यत्वम् ) च । वायोस्तु पित्तकफापेक्षया सूक्ष्मत्वम् अव्यक्तो व्यक्तकर्मा च—इत्यभिधानात् । उपाधिनिष्ठस्य तु वायोर्बहिरिन्द्रिय, ग्राह्यत्वमपि नोरं नभ.— इति- वत् ।

७। अतृष्णोपगृहीतानि पञ्चमहाभूतान्येव वातादीनामुपादानानि । तदुत्पत्तिक्रमस्तु चरके शरीरस्थाने ३ अध्याये निदिष्टः । यथा "तत्र पूर्वं चेतनाधातुः सत्वकरणो गुणग्रहणाय । प्रवर्तते । स गुणोपादानकाले अन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते । प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूत सत्वोपादान. पूर्वतरमाकाशं सृजति ; ततः क्रमेण अव्यक्तान् धातून् वाय्वादिकाश्चतुर' ; तथा देहग्रहणेऽपि प्रवर्तमान पूर्वतरमाकाशमेवोपादत्ते, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः । सर्वमपि तु खल्वेतद् गुणोपादानमणुना कालेन भवति ।"

८। वातादीना स्वरूपं ( तन्मात्रविषयकधीविषयः ) चरकोक्तं ( यथा )—

वायो —"रौक्ष्यं लाघवं वैशद्यं गतिः अमूर्त्तत्वं चेति वायोरात्मरूपाणि ।"

पित्तस्य—"औष्ण्य तैक्ष्ण्य लाघवम् अनतिस्नेहो वर्णश्च शुक्लारुणवर्ज्जो

---

* एते च निर्णयः सिद्धान्तनिदानोक्त सिद्धान्ते सर्वथा सवादिन.—इति छात्रैर्भिर्विभावनीयम् ।
—इति प्रकाशकस्य ।

गन्धश्च विस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाणि ।" श्लेष्मणस्तु—
"स्नेह-शैत्य-माधुर्य मात्स्न्यानि श्लेष्मण आत्मरूपाणि भवन्ति।"
इति । गुणाः कर्माणि च ग्रन्थोक्तान्येव ।

९। वातादीनां प्रत्येकं पञ्चविधत्व वास्तविकम्, तच्च स्थानकार्यभेदोत्पन्नम्;
कार्यस्वरूपभेदस्तु तन्निबन्धन एव ।

१०। रोगान् प्रति सदूष्याणां वातादीनां समवायिकारणत्वम्, सूक्ष्मरूपाणान्तु
निमित्तकारणत्वम् । दोषदूष्यसम्मूर्छनायाश्च असमवायिकारणत्वम्
रोगविशेषान् प्रति कीटादीनान्तु निमित्तकारणत्वम् ।

श्रीमधुसूदन विद्यावाचस्पति. (जयपुरम्)
स्व० गणनाथ सेन शर्मा ( महामहोपाध्याय ) सभापति
व. लक्ष्मण अमरजी पाठकः (डाक्टर)
लक्ष्मीराम स्वामी ( जयपुरम् )
श्रीराजेश्वर शास्त्री द्राविड
जि० श्रीनिवासमूर्ति (वैद्यरत्न)
श्रीदेवनायक आचार्यः
सत्यनारायण शास्त्री (वैद्य., काशी )
यादवजी त्रिकमजी आचार्य. ( मन्त्री— मुम्बई)
वामनशास्त्री दातारः ( मन्त्री— नासिक )

# ग्रन्थकर्त्तुर्निवेदनम् ।

( प्रथमावृत्तौ )

आयुर्वेदाध्यायिभिश्छात्रैः प्रथमेव निदानमध्येयमितीयं परम्परा सम्प्रति सकले भारते प्रचरतितराम् । परम् अविदित वात-पित्त कफतत्त्वा अनाकलितशारीर-परिचयाश्च शिष्या निदानमधीयाना बहुधा प्रमाद्यन्ति, व्याकुलीकुर्वन्ति च परमर्षीणामभिप्रायमिति सुविदित विदितवेदितव्यानाम् । न हि सूत्रस्थाने दोष-दूष्यादिविवरणमप्रतिपाद्यैव निदानस्थानमुपदिदिशु प्राञ्च । तस्मान्निदानाध्यायि-भिरादौ शरीरविज्ञानभित्तिक दोषदूष्यादिविवरणमवश्यमेवाधिगन्तव्यमिति कस्ता-वदत्र चक्षुष्मानुदासीत ?

किञ्च कालान्तरपरिणामादिनानाकारणवशादिदानीं प्रादुर्भूता केचन नवीना रोगाः, विपरिणतलक्षणाश्च केचन प्राचीनाः, विलुप्ताश्चापरे शास्त्रोक्ताः—इत्याकलय्य साम्प्रतिकीं प्रवृत्तिमुद्दिश्य यथादृष्टमुपदेष्टव्यानि रोगाणां लक्षणानि । न हि तानि यथावदुपलभ्यन्ते प्राचीनसंग्रहेभ्यः ।

अथापि संक्रामकरोगाणां विवरणे योऽसौ बहुप्रमाणसिद्धो जीवाणुकारणवादः परमर्षीणां सुसम्मतोऽप्यधुना वैद्यैर्विस्मृतप्राय. सोऽपि सत्यनिर्द्धारणार्थं संक्रमण-वारणार्थं चिकित्स विशेषाभ्युपगमार्थञ्च पुनरपि वैद्यैरवश्यं प्रतिपत्तव्य—इत्यपि सुवेदं सूक्ष्मदृशाम् । दुर्व्याख्यात-दुरधीतशास्त्रार्थविषमूर्च्छिता च वैद्यकसरस्वती सम्प्रति परमर्षिवचनामृतप्रसादपरिहीनेव लक्ष्यते । साऽस्माभिः शुश्रूषापरै. पुनः स्वस्थता प्रापणीया ।

तदिदं प्रयोजनजातं विमृशता मया स्वल्पमतिनाऽपि यथाज्ञानं श्राम्यता सिद्धा-न्तनिदानाख्योऽयं ग्रन्थो निरमायि । भूम्ना चात्रोपन्यस्तानि प्राचामेव वचनानि सिद्धान्तनिर्णयार्थमभिनवतत्त्वसंग्रहार्थं स्पष्टतरार्थप्रतिपादनार्थञ्च स्वरचितान्यपि कानिचित् । मूलग्रन्थार्थं स्फुटीकर्त्तुं विवृतिश्चात्र मया स्वयमेव व्यधायि । तर्क-कर्कशाश्च विचारा यथाशक्ति परिहृताः शिष्यबोधसौकर्य्याय ।

अथेदानीमभ्यर्थये—निर्मत्सरैर्महानुभावैः प्राणाचार्य्यैरध्यापितोऽयं ग्रन्थो वैद्यकाध्यायिनामुपकाराय सम्पद्यताम् , तथाऽध्यापिताश्चाऽकुण्ठबुद्धय प्रवर्त्तन्तां भिषज. कर्मसु इति ।

इयञ्चापरा प्रार्थना विद्वन्मुख्येभ्यः—नवीनसरणौ प्रवृत्तस्य स्वल्पमतेर्मे प्रमादा सुलभा इति सकरुणमुपेक्ष्य दोषान् सफलता नेयो मे श्रमः, प्रदर्शनीयाश्च अपुरोभागितया मे त्रुटयः—इति । किञ्च—

मुद्राकर-कराघात खिन्ना चेन्मम भारती ।
कृपाकराम्बुजामर्शैः सन्तः सञ्जीवयन्तु ताम् ॥ इति प्रार्थना—

विद्वज्जनानुचरस्य सेनोपाह्व—

**स्व० गणनाथशर्म्मणः**

## ग्रन्थकर्त्तुर्निवेदनम् ।

( द्वितीयावृत्तौ )

अखिलकल्याणगुणाकर श्रीमन्नारायणचरणानुकम्पया प्रथमावृत्तिमुद्रितेषु "सिद्धान्तनिदान" पुस्तकेषु सत्वरं निःशेषता गतेषु कियता कालेन दुर्लभतां प्राप्तोऽभूदयं ग्रन्थः। ततश्च अध्येतृजनानामनुरोधादियमस्य द्वितीयावृत्ति प्रकाश्यते किञ्चित्परिवर्त्तन-परिवर्द्धनादिसहिता। जीवत्कवेश्च वेद दोपाय कल्पते इति क्षन्तव्योस्मि सुधीजनैः। किञ्च, नाद्यापि द्वितीयं खण्डमस्य प्रकाशितमिति यत्सत्यं कृपागसमात्मान मन्ये। हन्त दैवदुर्विपाकहेतोर्धर्मपत्नीवियोगेन निजाऽस्वास्थ्येन कार्य्यबाहुल्येन च प्रपीडितो नालमास बुधजननियोगमनुपालयितुमिति मर्षणीयो मे मन्तु सहृदयैः। आशासे च सत्वरमेवास्य द्वितीयं खण्डं प्रकाशयितुं क्षम विधास्यति मा श्री भगवतः करुणेति शम्।

आषाढ़ी पूर्णिमा,<br>सं० १९८४। } विद्वज्जनचरणानुचरस्य सेनोपाह्व-<br>स्व० गणनाथशर्म्मणः

( चतुर्थ्यावृत्तौ )

## ग्रन्थकर्त्तुर्निवेदनम्।

श्रीमन्नारायणकरुणावतारस्य भगवतो धन्वन्तरेः करुणया सिद्धान्तनिदानस्य प्रथमखण्डात्मकस्यापि द्वितीयावृत्तौ एव तृतीयावृत्तौ ग्रन्थसहस्रद्वयी नि शेषता गतेति चतुर्थ्यावृत्तिरस्याधुना प्रकाश्यते। ये च खलु सहृदयाः ग्रन्थमिमं समाद्रियमाणाः पठन-पाठनेनास्य सफलता सम्पादयामासुः तान् प्रति हार्दिकीं कृतज्ञतां निवेदयामः। न हीदृश सौभाग्य जीवतो ग्रन्थकर्त्तुः प्रायेण भारते दृश्यते।

अथ चतुर्थ्यावृत्तिसम्पादनावसरेऽस्माभिरस्य ग्रन्थस्य क्वचित् क्वचित् किञ्चित्-परिवर्त्तन-परिवर्द्धनाभ्या यथामति सौष्ठवं व्यधायीति बुधैरवधेयम्। विशेषतश्चेह वातवलासकज्वरप्रसङ्गे स्वकीयं मतं किञ्चित् परिवर्त्तित भूयस्तरदर्शनेनेति क्षन्तव्योऽस्मि मनस्विभिः।

माघ पूर्णिमायां सम्वत् २००६<br>कलकत्तामहानगरीत } विदुषां विधेय<br>श्रीसुशीलकुमारशर्म्मणः

# सिद्धान्तनिदान—प्रथमखण्डस्य सूची।

( विषयाः ) (पृष्ठाङ्काः)

---

॥ ओ नमः आयुर्वेदाचार्य्येभ्यः ॥

# सिद्धान्तनिदानम् ।



**जयन्त्यपूर्वाः श्रीविष्णु-पादाम्बुजरजःकणाः ।**
**मोहान्धतमसाच्छन्न-जनदृष्टिप्रसादनाः ॥ १ ॥**

---

स्मरामि जगदम्बिकाचरणचारुपङ्कद्वयं
परिस्फुरदसीमके भुवनकारणे वारिणि ।
तदीयनखकेशरोल्लसदमन्दकान्तद्युति
मदीयहृदयाम्बरे दिशतु चन्द्रिकाशुभ्रताम् ॥
निदाने स्वच्छसिद्धान्तबोधिनी बुधतोषिणी ॥
स्वकृतौ क्रियतेऽस्माभिर्विवृतिस्तत्त्वदर्शिनी ॥
मूलेऽतिविस्तरभियोऽनुक्तं ब्रूमः सविस्तरम् ।
अर्थान् प्रविशदीकुर्म्मो निरस्यामश्च संशयान् ॥
न तर्ककर्कशं व्यर्थमारभामः कटूत्कटम् ।
उपयोगिनि तत्त्वे तु विस्तरं साधु मन्महे ॥
क्वाऽपारमायुषः शास्त्रं क्व संकीर्णा मतिश्च नः ।
तथापि गुरुकारुण्यं स्थिरालम्बं श्रिता वयम् ॥

इह खल्वायूर्वेदो नाम निखिलरुजार्त्तजनपरित्राणपुण्यव्रतं शास्त्रं यद् ब्रह्मादौ भगवान् लोकपितामहो निर्म्ममे, ब्रह्मणः प्रजापतिरधिजग्राह, प्रजापतेरश्विनावश्विभ्यामिन्द्रः, ततो धन्वन्तरिभरद्वाजौ, ताभ्याञ्च सुश्रुतोरध्राग्निवेशभेलप्रभृतयः संहिताकृतः पुराणाः । सोऽयमायुषः पुण्यतमो वेदो यं हेतुलिङ्गौषधज्ञानाख्य-स्कन्धत्रयविभक्तमनन्तपारमामनन्ति स्म त्रिकालदर्शिनो महर्षयोऽनन्तत्वात् त्रैकालिकनिखिलविकार-हेतु-लिङ्गौषधानाम्, उपदिदिशुश्च—"न चैव ह्यस्ति सुतरामायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत् । कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः शत्रुश्चाऽबुद्धिमतामतश्चाभिसमीक्ष्य बुद्धिमताऽमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्यूपदिशतो वचः श्रोतव्यमनुविधातव्यञ्च"—इति ( च० वि० ८ अ० ) ।

आयुर्वेदमहाम्भोधि-पारोत्तीर्णधियं गुरुम्।
विद्याकल्पद्रुमं तातं विश्वनाथं नमाम्यहम्॥ २॥

अथ गच्छति कालेऽस्माकमधन्यतया विलुप्तप्रायासु चरक-दृढवल नागार्ज्जुना[२]-दिप्रतिसंस्कृत-भग्नावशेषासु चाऽग्निवेशसुश्रुताद्यनेकमहर्षिसंहितासु नातिपुष्कल-ज्ञान-नानानिवन्धृजन-जतपकल्पनाजलदाच्छन्नायाञ्चाऽर्षज्ञानप्रभाया[१] प्रादुर्बभूवः परःशतानि तन्त्राणि—यान्यनार्षाण्यपि स्वल्पतरविषयाण्यपि वहुमन्वानाः कूप-मण्डूकवद् इयत्तया परिच्छिन्नमपारमायुर्वेदविषयमाचक्षतेऽधुनातना वहवः। तदि-दानीमित्थंगते प्रतिसंस्कारापुरणाभ्या सवर्द्धनोद्ये वैद्यकनये हेतुलिङ्गाख्यं तस्यादिमं स्कन्धद्वयं रुग्विनिश्चयसाधनमधिकृत्य लभ्यमानचरकसुश्रुतसंहितादिभ्यः प्रामा-णिकान्यार्षवचांसि संगृह्य, संकलय्य च तदर्थान्, संयोज्य चाभिनवैः प्रत्यक्षसिद्धै-स्तत्त्वैरमुं सिद्धान्तग्रन्थं निर्म्मिमाण प्राच्यप्रतीच्यचिकित्सातत्त्वाधिगमकृतवहुश्रमो ग्रन्थकृदखिलविघ्नोपशमकामो भगवतः श्रीविष्णोश्चरणस्मरणपूर्वमुपक्रमते—

जयन्तीत्यादि। अपूर्वा इतरविलक्षणाः अचिन्त्यमहिमानः श्रीविष्णो-र्भगवतो वासुदेवस्य पादाम्बुजयोः रजःकणाः जयन्ति सर्वोत्कर्षेण वर्त्तन्ताम्। अथ कथमपूर्वाः? यतो मोहान्धतमसाच्छन्नजनदृष्टिप्रसादनाः। मोहोऽज्ञान-मेवान्धतमसमन्धङ्करणं तमः, तेनाच्छन्नानां मोहान्धानामिति यावत्। जनानां दृष्टिप्रसादना नेत्रप्रसादकराः। इतरे तु रजःकणाः स्पर्शमात्रेण प्रसन्नामपि दृष्टिं कलुषीकुर्युः, इमे तु नितरामन्धस्यापि दृष्टिं प्रसादयेयुरित्येषामपूर्वत्वम्। अत्रेदं ध्वन्यते ये तावदाधूनिकाऽल्पज्ञनिवन्धृजनग्रन्थमात्रालोकनेनाऽर्षाभिप्रायाऽना-कलनेन वाऽच्छन्नदृष्टयो नाल द्रष्टुमायुर्वेदस्योदारानन्तविषयता, ननु तेषामपि दृष्टिरुन्मीलतां श्रीमन्नारायणचरणरेणुव्यतिकरेणेति॥ १॥

अथ ग्रन्थकृदायुर्वेदाचार्य्यः स्वगुरु स्वर्गतं पितर प्रसिद्धयशस विद्याकल्प-द्रुमेत्यन्वर्थनामानं विश्वनाथभिषजं नमस्यति, स्ववुद्धिवैशद्यार्थमवश्यस्मरणीयत्वाद् गुरुचरणानाम्—आयुर्वेदेति। आयुर्वेद एव महाम्भोधिर्दुरवगाहः समुद्रस्तस्य पारोत्तीर्णा पारङ्गता धीर्यस्य तं तादृशं सर्वायुर्वेदस्वतन्त्र वहविद्यानिष्णातत्वाद् वाराणसेयपण्डितैर्विद्याकल्पद्रुमनाम्ना, प्रख्यापितमित्यादि स्पष्टम्। तादृशगुरो-रधीतायुर्वेदो न खलु सुधियामनादरणीयवचनोऽस्मीति ध्वनितोऽर्थः॥ २॥

१। विलोपादिकारणानि चासख्यानि अस्माभिर्दर्शितानि प्रत्यक्षशारीरस्य उपोद्घातभागे।

२। नागार्ज्जुन सुश्रुतप्रतिसंस्कर्त्ता न वेति संशयितमेव (दृश्यतां तत्रैव)। तथापीह प्रचलितमतानुसारेण नागार्ज्जुनस्य नामग्रहणम्।

नानातन्त्रप्रवृद्धानां भिषजां नाल्पमेधसाम्।
ज्ञानस्य सारमादाय रुग्विनिश्चयसाधने।
आर्षं वचः समाहृत्य नार्षं निर्हृत्य च भ्रमम्।
सत्यञ्चैकं समाहृत्य सिद्धान्तः संविधीयते। ३॥

---

अथ "अभिधेयफलज्ञान-विरहस्तिमितोद्यमा। श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः"—इति स्मरन् स्वेष्टदेवतागुरुनमस्कारानन्तरं प्रयोजनाभिधेय-सम्बन्धान् व्याचष्टे—**नानातन्त्रेति** श्लोकद्वयेन। रुजो रोगास्तेषां विनिश्चयः 'अमुं प्रदेशमाश्रित्येत्यादि"—वक्ष्यमाणाशेषविशेषप्रकारकं ज्ञानं, तस्य साधने हेतुलिङ्गज्ञानाख्ये आयुर्वेदस्यादिमे स्कन्धद्वये। सिद्धान्तो नाम बहुपरीक्षासंसिद्धः सहेतुको निर्णयः। तथाहि चरकः—"सिद्धान्तो नाम यः परीक्षकैर्बहुविधं परीक्षितो हेतुभिः साधयित्वा स्थाप्यते निर्णयः" इति ( च० वि० ८ )। संविधीयते सम्यक् प्रतिपाद्यते मयेति शेषः। एतेन रोगाणां हेतुलिङ्गज्ञानं प्रयोजनं, तत्सिद्धान्तसमुदायोऽभिधेयस्तेन चास्य ग्रन्थस्य प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्ध इत्यभिहितं भवति। सिद्धान्त इति कथनेन ग्रन्थस्य सिद्धान्तनिदानमिति नामख्यापनमुपादेयताव्यञ्जनञ्च स्फुटीभवतः। ननु अनन्तपारस्तावदयमायुर्वेदोऽपरिसंख्येयाश्च रोगास्तत् कथमेषां विनिश्चये स्वल्पायुषा स्वल्पज्ञानेनैकेन भवता शक्यं सिद्धान्तसंविधानमित्याह—**नानातन्त्रेत्यादि।** नानातन्त्राणि प्राच्य-प्रतीच्य-पुराण-नवीनाखिलप्रामाणिकजन-प्रणीतचिकित्साशास्त्राणि, तेषु प्रवृद्धानां सम्यक् परिनिष्ठितमतीनां नाल्पमेधसामतएव निखिलार्थग्रहण-धारणसमर्थानां भिषजां चिकित्सकानां ज्ञानस्य निश्चयात्मकबोधस्य सारमूहापोहादिप्रपञ्चविरहितं निष्कर्षमादाय गृहीत्वा। तथाच शक्यमस्मादृशैरपि आम्यद्भिर्यथासम्भवं सिद्धान्तसंविधानमिति भावः। ननु अनृषिरश्रद्धेयवचनो भवान्, सत्सु नानामुनीनां वचनैर्निबद्धेषु माधवकरादिकृतेषु प्रसिद्धनिबन्धेषु निष्फलारम्भश्चेत्याशंक्याह—**आर्षमित्यादि।** आर्षमृषिप्रणीतं वचः समाहृत्य लभ्यमानचरक-दृढ़बल-नागार्ज्जुनादिप्रतिसंस्कृताग्निवेश-सुश्रुतादितन्त्रेभ्यो यथालाभमवितथतत्त्वाभिधानपरं सङ्कलय्य। किञ्च अनार्षमनृषिभिः कृतं लोकैरविवेकिभिरार्षत्वेन गृहीतं भ्रममग्रे बहुधा दर्शयिष्यमाणं निर्हृत्य निष्कास्य, असत्यमिति दूरात् परिहृत्य। न हि नीरजस्तमसस्ते महर्षयोऽसत्यं ब्रूयुः, एतानि तावदार्षवचसां मध्ये निबन्धृ-जनभ्रान्तवचास्येवासत्यप्रतिपादकानीति तान्यवश्यमनार्षाणि परित्याज्यानि चेति

## अथ दोषदूष्यव्याधिनिर्णयः ।

वायुः पित्तं कफश्चेति शारीरो दोषसंग्रहः ।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ४ ॥

---

भावः । तदुक्तं —"येषां त्रिकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टा विबुद्धास्ते तेषां ज्ञानमसंशयम्"—इति । एवञ्च सत्यप्रियाणामाप्तानां महर्षीणां चरणानुसरणेन एकं सत्यं प्रमाणसिद्धं समादृत्य बहुमानेन गृहीत्वा । वक्तृविशेषनिःस्पृहगुणगृह्यतया स्वग्रन्थे निवेश्येति भावः । नन्वाप्ताः किल परमर्षयः श्रद्धेयवचनाः, अनाप्तास्त्वन्ये न श्रद्धेयवचना—इति चेत्, दृश्यतां चरकानुशासनम्— "आप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः-स चाप्तागमः" इति (च० सु० ११अ०) । तथाच—यथालाभमृषिप्रणीतैरवितथार्थैरनृषिप्रणीतैश्च वचनैः सत्यनिर्द्धारणपरोऽयं सिद्धान्तग्रन्थः प्रेक्षावत्प्रियो भवितुमर्हति, प्रत्यक्षादिप्रमाण-सुपरीक्षितसत्यादरणस्य नियतश्रेयस्करत्वात् ॥ ३ ॥

अथ शास्त्रारम्भे प्रतिपाद्यव्याधिविज्ञानमूलभूतं दोषदूष्यादिविवेकमुपक्रमते चरकीयश्लोकेन (च० सू०१ अ०) – **वायुरिति**। दूषयन्ति शरीरं मनश्चेति दोषाः । तेषां संग्रहः समुच्चयः, वक्ष्यमाणभेदप्रपञ्चसंक्षेपो वा, उद्दिष्टः कथितः परमर्षिभिः पूर्वैः । स च शारीरः शरीरसम्बन्धी दोषसंग्रहः—वायुः पित्तं कफश्चेति त्रितयात्मकः । मानसः पुनरसौ रजश्च तमश्चैवेति द्वितयात्मकः । एवकारेण सत्त्वं व्यवच्छिनत्ति, सत्त्वं ह्यविकारि गुण एव न दोषसंज्ञामर्हतीति । अयमभिसन्धिः । सत्यपि घनिष्ठे परस्परसम्बन्धे द्विविधाः खल्वधिष्ठानभेदतो रोगाः वक्ष्यमाणस्वरूपाः—शारीरा मानसाश्च, तत्र शारीराणां रोगाणामाभ्यन्तरहेतुभूता विकृता वातादयस्ते हि तथा-भूता विकुर्वन्ति दूष्याणि रसरक्तादीनि, मानसानान्तु रोगाणामाभ्यन्तरहेतुभूते प्रवृद्धे रजस्तमसी, ताभ्यां हि तथाभूताभ्यां कामक्रोधमोहोन्मादादिपरीतं भवति मन इति ।

अत्रेदमवधेयम् । वातादीनां विकृतानामेव दोषसंज्ञा मुख्या अविकृतानान्तु तेषां धातुसंज्ञा, क्वचिद् गौणी वा दोषसंज्ञा स्वरूपयोग्यत्वात् । रजस्तमसी तु प्रवृद्धे दोषसंज्ञे, स्वभावस्थे पुनस्ते अपि प्रवृत्तिनियमार्थे गुणसंज्ञे प्राहुः । तथाच साङ्ख्याः—"सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः । प्रीत्यप्रीतिविषादात्मकाः प्रकाश - प्रवृत्ति-नियमार्थाः । अन्योन्याभिभवाश्रय-जनन-मिथुनवृत्तयश्च गुणाः ॥" इति ( साङ्ख्यकारिकायाम् )

नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥ ५॥

सन्ति चात्र विशेषप्रतिपादकानि भगवद्वचनानि - "सत्व रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥ तत्र सत्वं निर्म्मलत्वात् प्रकाशकमनामयम्। सुखसगेन बध्नाति ज्ञानसंगेन चानघ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। तन्निबध्नाति कौन्तेय कर्म्मसगेन देहिनम्॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्। प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥ सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत॥ रजस्तमश्चाभिभूय सत्वं भवति भारत। रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा॥ सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा-तदा विद्याद् विवृद्धं सत्वमित्युत॥ लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च। तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन॥" (गीता १४श अ०)। विस्तरस्त्वेषामाकरे द्रष्टव्य प्रष्टव्यश्च गुरुचरणेभ्य।

अथ काय-मनसोः सम्बन्धश्च परस्परमतिप्रनिष्ठोऽत्र प्रसंगे स्मर्त्तव्यः। तेन कायिकव्याधीना मानसोपाय-साध्यता, मानसव्याधीना कायिकोपाय साध्यता च बहुधा द्रष्टव्या। अतएव हि श्रूयते चरके—"रजस्तमोभ्यान्तु मन परीतं सत्त्वसंज्ञकम्। शरीरस्य समुत्पत्तौ विकाराणा च कारणम्।" (च० सूत्र०२५)

अथ शारीर-मानसरोगेषु शारीराणामेव रोगाणा प्रधानत्वात् तन्मूलहेतुभूत-दोषविवरणं सम्यक् प्रतिपादयितुं प्रपञ्चयति पुनश्चरकीयश्लोकेन -नित्या इति।

एतेषु पूर्वोक्तेषु शारीर-मानसदोषेषु मध्ये प्राणभृता प्राणिनामाकीटमनुष्याणा देहे त्रयो वातपित्तकफा नित्या. नियतावस्थायिनो यावच्छरीरावस्थानाः, विकृताः प्रकृतिस्था वेति द्विधा वर्त्तमानाश्च रोगारोग्यकरा इति शेषः। तत्र विकृता क्षयं वा वृद्धिं वा प्राप्ता रोगकरा, प्रकृतिस्था स्वभावस्थाः शरीरधारणहेतवः पुनरारोग्यकरा. —इत्यभिप्राय। अतश्च हेतोः पण्डितः प्राज्ञस्तान् बुभुत्सेत बोद्धुमिच्छेत्, दुर्बोधानपि तान् स्वरूपतो वेत्तुं प्रयतेत। अत्र वातपित्तकफा इति त्रयाणा नामतः पृथङ् निर्देशेऽपि पुनस्त्रय इति कथनं नियमार्थम्। तथाच वातादयस्त्रय एव दोषा नित्याः, रजस्तमसी तु न नित्ये, पातञ्जलोक्तैरुपायैस्तयो. सर्वथा तिरोभावसम्भवादित्यभिसन्धिः। श्रूयते च 'रजस्तमोभ्या निर्मुक्ता"—इत्यादि। एवञ्च वातादिदोषत्रयादृते शरीरमेव शीर्यते, रजस्तमोभ्या निर्मुक्तं तु मन सत्त्वमात्रेऽवतिष्ठमानं महीयते—इत्यथाऽवसेय.॥ ५॥

[ अथ प्रकृतिस्थवातादिकर्म्माणि । ]

अथादौ द्विविधा एते प्रसाद--मलभेदतः ।
सारभूताः प्रसादाः स्युः किट्टभूता मलाः स्मृताः ॥ ६ ॥
उत्साहोच्छ्वास-निःश्वास-चेष्टा धातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्म्माऽविकारजम् ॥ ७ ॥

---

एतेषाञ्च वातादीनां स्वरूपं दिङ्मात्रेण बोधयितुमाह—अथेति । अथैते वातादयस्त्रयो दोषा आदौ प्रागवान्तरविभागाद् द्विविधाः स्वरूपभेदेन बोद्धव्याः । स्वरूपभेदश्च प्रसाद-मलभेदतः । तत्र सारभूताः अच्छभागभूतास्ते प्रसादभूतास्ते स्तथाविधैरेव विक्षेपादानविसर्गकर्म्मभिः शरीरधारणात् । किट्टभूताः,—किट्टं नाम लोहादीनां ध्मातानां यस्त्याज्यो भागः, तादृशत्याज्यभागरूपाः, मलाः स्मृताः मलिनीकरणाद्धेतोः । अयमभिसन्धिः—एते खलु वातादयः शरीरे द्वेधाऽवतिष्ठन्ते, तत्र तेषां ये सूक्ष्माऽसूक्ष्माः सारभूताः शरीरधारण-चालनान्नविपाचन-पोषणादिकारिणो भागास्ते प्रसादाः । शरीरबाधकरास्त्याज्यभागास्तु श्लेष्मसिङ्घाणकाद्या मलभूताः । एवञ्च प्रसादभूतेष्वेव तेषु वातादिसंज्ञा मुख्या; मलभूतेषु तु गौणीत्याचार्य्याणामेभिप्रायः । तथाच चरकः—“शरीरधातवः पुनर्द्विविधाः सङ्ग्रहेण—मलभूताः प्रसादभूताश्च । तत्र मलभूतास्ते ये शरीरस्याबाधकराः स्युस्तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः परिपक्वाश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणः, ये चान्येऽपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते सर्वांस्तान् मलान् सञ्चक्ष्महे, इतरांस्तु प्रसादान्” इति ( च० शा० ६ अ० ) । तथाच न भ्रमितव्यम्—वायुः साधारणो मरुदेव, पित्तं मुखादिनिर्गतं पीतद्रव्यमेव, श्लेष्मा नासादिनिर्गतो मलविशेष एवेति । वातादिस्वरूपविवरणञ्च विस्तरतः प्रसङ्गशेषे विचारयिष्यामः ॥ ६ ॥

सम्प्रति वातादीनामविकृतानां स्वरूपं कार्य्यमुखेन परिचाययति चरकीयैरेव श्लोकैः ( च० सु० १८ अ० )—उत्साहेत्यादिभिः । उत्साहः कर्म्मारम्भप्रदो रजोगुणप्रभवो मानसव्यापारः । उच्छ्वासः श्वासपथेन बाह्यवायोराकर्षणम् । निःश्वासः आकृष्टश्वासवायोर्निरसनम् । चेष्टा तावदिह अविकृतचेष्टा भाषणादानगमनादि । समा धातुगतिः—धातूनां रसादीनामविषमा गतिर्निखिलशरीरसम्प्रीणनाय यथायथस्थानगमनम् । 'एतेन हृदयाद्धमनीषु, धमनीभ्यो जालकमार्गैः सिरासु, सिराभ्यश्च पुनर्हृदयाभिमुखं प्रवर्त्तमाना रक्तसंवहनक्रिया[1], अन्याश्च मूत्रविसर्गाद्या

---

१। एषा च रक्तसंवहनक्रियाऽस्मदीय प्रत्यक्षशारीरे सम्यग् वर्णिता ।

दर्शनं पक्तिरूष्मा च क्षुत् तृष्णा देहमार्द्दवम् ।
प्रभा प्रसादो मेधा च पित्तकर्म्माऽविकारजम् ॥ ८ ॥

वातकृता एवेति सूच्यते । गतिमता पुरीषादीनां वहिर्निःसरता समः स्वभावानुकूलो मोक्षो विसर्गश्च - इत्येतदखिल रजोगुणात्मकस्य प्रवृत्तिधर्म्मिणो वायोरविकारजं प्राकृतं कर्म्मेति । वायुपदञ्च 'वा गति गन्धनयो'रिति धातो । एव तावत् संक्षेपः, विस्तरस्तु चरके वातकलाकलीये प्रतिपादितः, यथा "वायुस्तन्त्रयन्त्रधरः, प्राणोदान-समान व्यानाऽपानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचाना, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योतक ,सर्वेन्द्रियार्थानामभिवोढ़ा, सर्वशरीरधातुव्यूहकर. सन्धानकरः शरीरस्य प्रवर्त्तको वाचः,प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलं,हर्षोत्साहयोर्योनिः समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता वहिर्मलाना स्थूलाणुस्रोतसा भेत्ता, कर्त्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः"इति ( च० सू० १२ अ० )। एवंविधश्च वायुरचिन्त्याऽतीन्द्रियशक्तिक सूक्ष्मद्रव्यस्वरूप इत्यग्रे विशदीकरिष्याम ।

अथ प्रकृतिभूतस्य पित्तस्य कार्यजातं संक्षिप्याह दर्शनमिति । दर्शन रूपोद्भासनम् । दृष्टिनाडीवितानभूताया नेत्राभ्यन्तरीय चरमवृतौ आलोचक पित्तस्य नाम तेज प्रकाशनवस्तुविशेषस्याऽवस्थानात्तस्य कर्म्म दर्शनं रूपवद्वस्तुप्रतिभासन मुच्यते तद्बोधविशेषस्तु वायुना प्रकाशितरूपस्य दृष्टिनाडीमार्गेण मस्तिष्कप्रापणे सति[1] समुद्भवति । अतएवोक्तं चरके—'सर्वेन्द्रियार्थानामभिवोढ़ेति" । पक्तिः पाको भुक्तजरणात्मक, स च आमाशये अम्लरसस्रावात् पक्वाशये पित्तकोषाद्या-गत क्षारपित्तादिसंयोगाच्च सम्पद्यते । रसस्य च यकृत्प्लीहोर्विचरतो रञ्जकपित्तेन यः पाको रागदः साऽपि पक्ति । द्वयञ्चैतदाग्नेयं कर्म्म पाचक-रञ्जक पित्तजम्। अपरश्च पाको धात्वग्निजन्यो धातौ धातौ धातुपरिणामकृत्[3] । तदेतत्त्रितयं पक्तिपदाभिधेयम् । ऊष्मा शरीरस्यस्वाभाविक सन्तापः । क्षुत् क्षुधा —बुभुक्षा । तृष्णा पिपासा जलाकांक्षा । तानीमानि कर्म्माणि पित्तकृतानि, अग्निरूपेण पित्तेन दन्दह्यमानेषु शरीरधातुषु तेषामुद्भावात् । देहमार्द्दव देहस्य मृदुता स्वेदादिकृता । स्वेदो हि पित्तमव उच्यते, ततकृतश्च मार्द्दवं त्वचि प्रसिद्धम् । अथवा त्वगधःस्थस्य मेदस. पित्ततेजसा नियतं विलाप्यमानस्य सम्पर्कात्त्वचि मार्द्दवं स्वाभाविकम् । प्रभा कान्तिः, भ्राजकपित्तस्य त्वचि स्थितस्य भ्राजनधर्म्मत्वात्। प्रसादः मनसः प्रसन्नता । मधा स्मृति[2] । ते च द्वे सत्त्वगुणोद्भूते मनोनिष्ठे, सत्त्वगुणभूयिष्ठत्वात्

१ । २ । एतद्व्याख्यान 'प्रत्यक्षशारीर'स्येन्द्रियखण्डे द्रष्टव्यम् । ३ । दृश्यता चरकीय-चिकित्सास्थाने १६ अध्याय ।

स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम्।
क्षमा धृतिरलोभश्च कफकर्म्माऽविकारजम्॥ ९ ॥
एवं विभिन्नकर्म्माणः प्रत्येकं पञ्चधा स्थिताः।
प्रसादभूता वाताद्यास्तैः शरीरं प्रधार्यते॥ १० ॥

---

पित्तस्य तेजोधर्म्मिणः। श्रूयतेच—'पित्तं सत्त्वगुणात्तरम्'—इति। तत्सव पुनरप्यग्रे सप्रपञ्चं वक्ष्याम। एवंविधञ्च पित्तं धातुभूतं मूर्त्तामूर्तस्वरूपं स्यादित्यवधेयम्।

अथ प्रकृतिभूतस्य कफस्य कार्य्यजातमाह—स्नेह इति। स्नेहः स्निग्धता सर्वधातुष्वाप्यभागयोजनात्। सोमगुणात्मको हि श्लेष्मा सर्वधातूनामार्द्रतां विदधद् रक्षति कायं शोषणतः, अन्यथा सर्वमपि पित्ततेजसा शुष्येत। बन्धो बन्धनं यथा सर्वास्थिसन्धीनाम्। सन्धयो हि स्नायुनिबद्धा अस्थ्ना नियतघर्षणेन क्षीयेरन् प्रच्यवेरंश्च स्थानाद् यदि श्लेष्मधराख्यकलान्तर्गतःश्लेषक श्लेष्मा घर्षणजक्षयवारणेन तेषा बन्धनं नाभिरक्षेत्। तथाच बन्ध इत्यस्य बन्धाभिरक्षणमित्यर्थः। श्लेष्मपदञ्च "श्लिष आलिङ्गने' इति धातोः। स्थिरत्वमङ्गानां दार्ढ्यम्। गौरवं प्राकृत शरीर-गौरवमशून्यतारूपम्। वृषता शुक्रलत्वम्। बलं व्यायामादिसहिष्णुता। तदेतत्त्रयमुपचय धर्म्मत्वात् श्लेष्मकृतम्, उपचयप्रदो हि श्लेष्मा प्रकृतिस्थः। तमोगुणस्य च सत्त्वादिनियामकस्य अनतिप्रवृद्धस्य क्षमादिप्रभवत्वात क्षमादित्रयं हि शौर्य्य-चाञ्चल्य लोभानां नियमनेन सम्भवति, नियमनञ्च तमोगुणस्यैव धर्म्मः। प्रवृद्धस्तु श्लेष्मा प्रमादालस्यमोहादिकर इति न कश्चिद् विरोध। अत एवोक्तं--"तमोगुणाधिकः श्लेष्मा"—इत्यादि[२]। स चाय सौम्यः श्लेष्मा धातुभूतो मूर्त्ता-मूर्त्तस्वरूप स्यादित्यधुनाप्युन्नेयम्॥ ९॥

तदेतदखिलं कर्म्म नानाप्रकारकं प्रसादभूतवातादिकृत, तत्तत्कर्म्ममूलञ्च शरीर-धारण प्राणिनामित्युक्तमुपसंहरति शिष्यबुद्धिवैशद्याय—एवमिति। ते पूर्वोक्ता वाताद्या वातपित्तकफा. एवमुक्तप्रकारेण विभिन्नकर्म्माण. पृथक्कर्म्मनिष्पादकाः सम्पद्यन्ते प्रत्येकं पञ्चधा स्थिता सन्तः, स्थानकार्य्यभेदेन एकैकस्य पञ्चभेद-स्वीकारात्। यथा सुश्रुते "प्राणोदानौ समानश्च व्यानश्चापान एव च। स्थानस्था मारुता पञ्च यापयन्ति शरीरिणम्॥ वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्।

---

१।२ एतत् पाठद्वय गाङ्गधरेणोद्धृतम्। श्लेष्मा सत्त्वगुणप्रधान इति प्रत्ययस्तु केषाञ्चित प्रामादिक[illegible]व। स चास्माभिरत्र निरस्त"।

**ते च प्रसादा द्विविधाः सूक्ष्म-स्थूलविभेदतः ।**
**तत्र वायुः सदा सूक्ष्म इतरौ तु द्वयात्मकौ ॥ ११ ॥**

---

सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते । प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादि विशेषोऽभिप्रवर्त्तते । ऊर्ध्वजत्रुगतान् रोगान् करोति स विशेषतः ॥ आम पक्वाशयचरः समानो वह्निसङ्गतः । सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि । गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान् ॥ कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः । स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि । क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् ॥ पक्वाधानालयोऽपानः काले कर्षति चाप्ययम् । समीरणः शकृन्मूत्र-शुक्रगर्भार्त्तवान्यधः । क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ।" इति (सु० निदान० १ अ० ) । तेषाञ्च वायुभेदानां शारीरवर्त्मादिविशेषाः प्रत्यक्षशारीर-नाडीखण्डे प्रतिपादिता द्रष्टव्याः । पञ्चधा पित्तस्वरूपं चाह सुश्रुतो यथा-"पक्वामाशयमध्यस्थं[1] पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च रस-दोष-मल-पुरीषाणि । तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति,– तस्मिन् पाचकोऽग्निरिति संज्ञा । यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा,—स रसस्य रागकृदुक्तः । यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः । यद् दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा,—स रूपग्रहणेऽधिकृतः । यत्तु त्वचि पित्तं, तस्मिन् भ्राजकोऽग्निरिति संज्ञा,—सोऽभ्यङ्गपरिषेकावगाहालेपनादीनां क्रियाद्रव्याणां पक्ता, छायानाञ्च प्रकाशकः ।" इति ( सु० सूत्र० २१ अ० ) । अथ श्लेष्मणो भेदा अपि कर्म्मभेदेन पञ्चैव । तद्यथा सुश्रुते—'माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च । आमाशये सम्भवति श्लेष्मा मधुरशीतलः' (सु० सूत्र० २१ अ०) । तत्र 'क्लेदक' इति संज्ञा । "उरःस्थस्त्रिक सन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं ( च ) करोति ।" तस्मिन् 'अवलम्बक' इति संज्ञा । श्वासपथादीनां किञ्चित् श्लेष्मणाऽलेपनं स्वाभाविकमस्यैव श्लेष्मणः कर्म्म । या च तन्वच्छलसीका फुस्फुसधरकलाकोषयोः हृदयधरकलाकोषे च स्वाभाविकी, सापि इहैवान्तर्भूता । "जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सम्यग्रसज्ञाने वर्त्तते ।" तस्मिन् 'रसक' इति 'बोधक' इति वा संज्ञा । "शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति ।" तस्मिन्

---

१ । अत्र मध्यस्थमभ्यन्तरस्थं, न तु अन्तरालस्थमिति व्याख्येयम् । २ । अत्र हृदयपदं ब्रह्महृदयवाचि । तद्वर्णनं प्रत्यक्षशारीरस्य नाडीखण्डे द्रष्टव्यम् ।

'लपक' इति संज्ञा । "सन्धिस्थस्तु श्लेष्मा सर्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रहं करोति ।" तस्मिन् 'श्लेषक' इति संज्ञा । सोऽयं पञ्चविधस्वरूपः श्लेष्मा निखिलमपि शरीरमुदककर्मणाऽनुगृह्णाति । अतश्च विभुरूपेण सर्वशरीरचरोऽसौ सर्वधातूनामनुग्राहकः । प्रकटितरूपाणि चास्य प्रसादनधर्मत्वात् प्रसादाख्याः प्रसन्नाच्छधातुरूपा विज्ञेयाः । तैश्च तथाभूतैः शरीरं प्रधार्यते, प्रकर्षेण रक्ष्यते । मलभूतैर्दोषैरीदृशानुग्रहकर्मणामशक्यत्वात् ॥ १० ॥

ननु एते वातादयो मूर्त्ता अमूर्त्ता वा, तत्र वायुस्तावदमूर्त्तोऽस्तु, पित्तश्लेष्माणौ तु मूर्त्तावेव स्यातामित्याशङ्कां निरस्यति संशयच्छेदिना वचनेन—ते चेति । ते च पूर्वोक्तकर्माणः प्रसादाः प्रसादरूपा दोषाः द्विविधाः, द्वेधा वर्त्तन्ते स्वरूपेण । सूक्ष्मस्थूलविभेदतः,—सूक्ष्मरूपेण स्थूलरूपेण च विशिष्टभेददर्शनात् । सूक्ष्मत्वं च नामेह अदृश्यत्वमतीन्द्रियत्वं वा, स्थूलत्वन्तु दृश्यत्वमिन्द्रियगोचरत्वं वा ।

नन्वेव वायुरपि सूक्ष्मः स्थूलश्चेति द्विविधः स्यादिति विशेषमाह—तत्रेति । तत्र तेषां मध्ये वायुः सदा सर्वास्ववस्थासु सूक्ष्मः, अप्रत्यक्षो विद्युत्-प्रवाहवद् अचिन्त्यातीन्द्रियशक्तिकः क्रियामात्रानुमेयश्च । इतरौ पित्तश्लेष्माणौ तु द्व्यात्मकौ सूक्ष्मरूपतः स्थूलरूपतश्च वर्त्तते शरीरे । तत्र वायोः सूक्ष्मत्वं चरके वातकलाकलीयाध्याये यथा प्रतिपादितं तथा प्रागदर्शयाम । सुश्रुतेऽप्युक्तम्—"स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः । स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च । सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः । स्थित्युत्पत्तिविनाशेषु भूतनामेष कारणम् । अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः । तिर्य्यग्गो द्विगुणश्चैव रजोबहुल[1] एव च । अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट्" इत्यादि (सु०निदान० १अ०) । पित्तस्यापि सर्वत्रैवातीन्द्रियत्वमन्यत्र पाचकपित्तात्[2] । पाचकपित्तं ह्यामाशये अम्लरूपमग्रतश्च पच्यमानाशयात् प्रभृति कटुक्षाररूपमुपलभ्यते । दृश्यञ्च तत् स्वाभाविकं सद्यो विपाटितोदरस्य जीवतः, विकृतञ्च मुखादिनिर्गतं प्रच्छर्दतः पुरुषस्य । तदेतत् स्थूलरूपं पित्तस्य । सूक्ष्मा तु रसरक्तादिधातुविपरिणामिनी क्रिया सन्तापशोषणाऽऽदानादिक्रिया च सूक्ष्मस्यैव पित्तस्य । तदपि पाचकपित्तस्यैव सूक्ष्मरूपेण चरतश्चरकमते धात्वग्निसंज्ञस्य कर्मेति आचार्याः । तथाहि सुश्रुते—'तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य

१ । द्विगुण इति सत्त्वतमःसम्पृक्तः, तेन तेजसस्य सत्त्वगुणस्य सम्पर्कादुष्णः, सौम्यस्य तमोगुणस्य सम्पर्काच्छीतश्च स्वयं तु स्वभावाद्रजोगुणभूयिष्ठ इत्यभिप्राय । २ । त्रिरूपं हि स्थूलं पित्तं पाचकाख्यं सूवेद शारीरदौ । तद्धि आमाशये अम्लरसं ग्रहण्यां पित्तकोषादागतं कटुतिक्त-क्षारप्राय, अग्न्याशयान्निःसृतं च कटुक्षारम् । अतएव पित्तं क्वचिदम्लं, क्वचित् कटु चाहुरिति सत्यम् ।

मलभूतौ तु नियतं स्थूलौ पित्तकफौ स्मृतौ ।
ते प्राकृताः प्रसादाः स्युर्विकृता मलसंज्ञकाः ॥ १२ ॥

चाग्निकर्मणाऽनुग्रहं करोति" इति (सु०सूत्र० ११ अ०) । "जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते" - इति च । अथ श्लेष्मा पुनः स्थूलप्राय उदकगुणभूयिष्ठः । किन्तु तर्पकाख्यः श्लेष्मा सूक्ष्मप्रायः । यश्चामाशये क्लेदकाख्यः श्लेष्मा स्थूलस्तस्यापि सूक्ष्मो भागः सर्वशरीरचरः सर्वधातुव्याप्यभागयोजकः—इत्याहुः । यथा सुश्रुते—'स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणानुग्रहं करोतीति ।" वस्तुतस्तु—अवलम्बक रसक-श्लेषकाख्याः श्लेष्मभेदाः स्थूला एव सर्वजनदृश्याः, तत्रावलम्बकः श्वासपथादेरभ्यन्तरतः स्वाभाविकाऽऽर्द्रताप्रदः । रसको जिह्वादेरार्द्रतासम्पादकः स्वाभाविकलालारूपः स्वादग्रहणसहायः । श्लेषकः सन्ध्यान्तःस्नेहवत् पिच्छिलपदार्थमयः—इति । उक्तञ्च—"स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्त्तते । सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ।" इति । तर्पकोऽपि श्लेष्मा नासाचक्षुरादीनामार्द्रताप्रदः स्थूलभूयिष्ठ एवेत्येके । अन्ये तु-सोऽयम् "इन्द्रियाणामात्मवीर्येणानुग्रहं करोती"ति कृत्वा शिरसि सौम्यगुणाधानकरः सूक्ष्म एवेत्यामनन्ति । वस्तुगत्या तु तस्यापि द्वैरूप्यमेव तत्त्वम् । किञ्च स्थिरत्व गौरव-वृषता-बल क्षमादिकर्माणि पूर्वोक्तानि प्राकृतस्य सूक्ष्मस्यैव सर्वशरीरचरस्य श्लेष्मणः कार्य्याणि स्युः । न हि तत्तत्स्थानमात्रव्यापकैरवलम्बकादिस्थूलश्लेष्मभेदैः सुकराणि तानि कार्य्याणि कयाऽपि कल्पनया । एवञ्च प्रसादभूतानां वातादीनां निखिलशरीरधारणाय स्थूणात्रयभूतानामखिलं कर्मजातमुपसंहरत्याचार्यः— 'विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा । धारयन्ति जगद् देहं कफपित्तानिलास्तथा" इति--(सु० सूत्र० २१ अ० ) । यत्तु सुश्रुते क्वचित् शोणितस्यापि दोषत्वमुक्तं "तैरेव शोणितचतुर्थै"रिति ( सु० सूत्र० २१ अ० ), तदौपचारिकं, व्रणानां विशेषेण शोणितसन्धानीयत्वात् । वस्तुतस्तु स्वतन्त्रदूषणात्मकत्वाभावात् प्रकृत्यारम्भकत्वाभावाच्च दूष्यतैव शोणितस्य, न दोषता॥ ११ ॥

अथ पित्तश्लेष्मणोर्मलभूतयोः स्वरूपं विशिनष्टि—**मलभूताविति** । मलभूतौ किट्टरूपौ पित्तकफौ तु नियतं सदैव स्थूलौ स्मृतौ, न तु पूर्ववद् द्वयात्मकौ । तथाच अम्लपित्तादिविकारेषु मुखादिनिर्गतमम्लरसं, कटु तिक्त क्षार-रसं वा समधिकं पित्तम्, प्रतिश्यायादौ नासादिस्रुतः पुष्कलश्च श्लेष्मा—इति द्वयमपि किट्टरूपमेवावगन्तव्यम् । ईदृशयोश्च किट्टरूपत्वं प्रतिपादयत्याचार्य्यः—"किट्टमन्नस्य

विण्मूत्रं रसस्य च कफोऽसृजः । पित्तं मांसस्य च मलो मलः स्वेदस्तु मेदसः” इति (च० चिकि० १५ अ० ) किट्टस्वरूपञ्च यथा-[१]“पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च । उष्णं कटुरसञ्चैव विदग्धं चाम्लमेव च ॥ श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च मधुरस्त्वविदग्धः स्याद् विदग्धो लवणः स्मृतः” इति (सु० सू० २१ अ० ) । वायुस्तु सदा सूक्ष्म एव तस्य मलपरिणामासम्भवात् । यदुक्तं—“पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना । परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः” इति, (च०चि० १५अ०)—तत्र वायु पदेन अन्नादिविपरिणामजन्यो वाष्पविशेष उच्यते आनाहाटोपादिकरः, तदवरोधश्च स्वाभाविकवायुक्रियाजन्या-कुञ्चनसंकोचनादि-दौर्वल्येन मलादिनिःसारणकर्मणः सम्यगयोगादेव भवति ।

अथ शिष्यवुद्धिवैशद्याय वातादीनां प्रकृति-विकृतिभाव सम्बन्धमपि स्फुटं प्रदर्शयति —ते इति । ते वातादयः प्राकृताः स्वाभाविका एव प्रसादाः प्रसादसंज्ञाः प्रागुक्तस्वरूपाः, प्रसादनकर्माणः । तैरेव ह्यव्यापन्नैः प्रसन्नात्मेन्द्रियमनाः स्वस्थो भवति पुरुषः । विकृता विकृतिं प्राप्तास्तु ते मलसंज्ञकाः, मलिनीकरणाद्धेतोः । उक्तञ्च—“शरीरदूषणाद्दोषा धातवो देहधारणात् । वातपित्तकफा ज्ञेया मलिनी-करणान्मलाः” इति (शार्ङ्ग० पू० ५ अ०)अत्र वहुवचनमतन्त्रम्[१], पित्त-कफयो पञ्चकद्वयग्रहणेन वा साधु । आहुश्च प्राञ्चः—“पित्तादेवोष्मणः पक्तिर्नराणां मुपजायते । पित्तञ्चैव प्रकुपितं विकारान् कुरुते वहून् ॥ प्राकृतश्च वलं श्लेष्मा वैकृतो मल उच्यते । स एवौजः स्मृतं काये स च पाप्मोपदिश्यते ॥ सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृताः । तेनैव[२] रोगा जायन्ते तेन चैवावरुध्यते ।” इति ( च० सूत्र० १७ अ० ) । तदेवं वुद्धिमता प्रसादभूतानां मलभूतानाञ्च वातादीनां भेदः पर्वतवदप्रकम्प्यः सदा स्मर्त्तव्यः, यतोऽमुं भेदमजानन्तो वहुधा व्याकुलीकुर्वन्ति परमर्षीणामभिप्रायमनेके भिषग्ब्रुवाः ।

इदञ्चात्रावधेयम् । एतेषां दोषाणां प्रसादभूतानां मलभूतानाञ्च सत्यपि महति भेदे प्रसादमलभावसम्बन्धोऽप्यतितरां नेदिष्ठो व्यवसेयः, सूक्ष्माणां प्रकृतिभूतानां दोषाणां प्रसादाख्यानां कारणभूतानां स्थूलेषु विकृतिरूपेषु मलाख्येषु कार्य्यभूतेषु परिणामदर्शनात्, पञ्चतन्मात्राणां पञ्चमहाभूतेषु परिणामवत् । एवञ्च यत्र यत्र कार्यांशे विशेषेण मलपरिणामो वैकृत-लक्षणदर्शनं वा वातादीनां, तत्रैव तेषामवस्थान विशेषः कल्प्यते, स्थूलवुद्धीनां वोधसौकर्य्याय । तथाहि चरके महारोगाध्याये—“तेषां

१ । अतन्त्रमिति न तन्त्रोक्तसंख्यावचनेऽभिप्रायः । वायोर्मलत्वाभावात् । पित्तपञ्चक-कफपञ्चकयो ग्रहणेन वा सङ्गतं वहुवचनम् । २ । तेनैवेति वातप्रसङ्गे मलसंज्ञा वयोनोपदिष्टेति लक्षणीयम् ।

त्रयाणामपि दोषाणां शरीरे स्थानविभागमनुव्याख्यास्यामः। (तद्यथा—वस्तिः पुरीषाधानं कटिः सक्थिनी पादावस्थीनि च वातस्थानानि,—तत्रापि पक्वाशयो विशेषेण वातस्थानम्। स्वेदो रसो लसीका रुधिरमामाशयश्चेति पित्तस्थानानि, तत्राप्यामाशयो विशेषेण पित्तस्थानम्। उरः शिरो ग्रीवा पर्वाण्यामाशयो मेदश्च श्लेष्मणः स्थानानि, तत्रापि उरो विशेषेण श्लेष्मस्थानम्।) इति (च० सू० २० अ०)। परमार्थतस्तु वातादयः सर्वशरीरचराः। अतश्चानुपदमेव दृश्यते चरके तत्रैव—"सर्वशरीरचराः खलु वातपित्तश्लेष्माणः सर्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति" इति। किञ्चतेषु वातादिषु प्रसादभूतेषु वायुरेव प्रधानम्, पित्तकफयोस्तदधीनत्वात्। उक्तञ्च—("वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम्। वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्त्तितः" इति (च० चिकि० २८ अ०)। उक्तञ्च—"पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवदिति॥") (शार्ङ्ग० पू० ५ अ०)।

ननु वायुश्चेदतीन्द्रिय एव तर्हि किमिदमुच्यते—"रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः। विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति" इति (च० सू० १ अ),। नहि रूक्षत्वशीतत्वादिगुणा अतीन्द्रियस्य स्युरिति चेत्, उच्यते। रूक्षत्वादिगुणा हि वायोः प्रवृद्धवाते शरीरे दृश्याः, तद्विपरीतोपशायितादि-कार्य्यानुमेयाश्च। न खलु ते साक्षादिन्द्रियगोचरा अस्मादृशाम्। अत एव सूक्ष्मत्वमपि युगपदुद्दिशति भ्रमवारणार्थमाचार्य्यः। सुश्रुते चोक्तं "अव्यक्तो व्यक्तकर्मा च"—इति। शीतत्वं तु वायोःस्वाभाविकमपि न नियतं दृश्यते,—तस्य योगवाहित्वात्। तथाह्युक्तं—"योगवाहः परं वायुः संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्" इति। एवंविधगुणसमूहसम्पन्नश्च वायुरतीन्द्रियस्तन्त्रयन्त्रधरः सर्वथा सर्वैर्भावैर्यथाशक्ति वेदितव्यः।

अथैषां वातादीनां प्रकृत्यारम्भकत्वं चाऽहुराचार्य्या गर्भाधानकाले मातापित्रोः शारीरावस्थाविशेषानुसारतो जातस्य प्रकृतिनिष्पत्तेः। तदाह सुश्रुतः (शा० ४अ)—"शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु"—इत्युपक्रम्य 'तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुकेशनखः क्रोधी दन्तनखादी च भवति॥ अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः॥ (इति वातप्रकृतेर्लक्षणम्)। "स्वेदनो दुर्गन्धः

१। एकवचनमतन्त्रम् यतो द्वि-त्रदोषाधिकत्वात् शुक्रशोणितयोर्मिश्रस्वभावतापि दृश्यते बहुधा।

त एते रसादिशुक्रान्ता धातवः" इति ( प्रत्यक्ष० २अ० )। वाग्भटस्त्वाह—"रसासृङ्मांसमेदोऽस्थि-मज्जशुक्राणि धातवः। सप्त दूष्याः, मला मूत्रशकृत्स्वेदादयोऽपि च।" (अष्टाङ्गहृ० सू० १अ० )। व्याख्यातञ्चेदमरुणदत्तेन- "शकृदादयो मला उच्यन्ते। अपिचेति शब्दाद् दूष्याश्चेति। न केवलं रसादय एव दूष्याः, यावन्मला एतेऽपि वातादिभिर्दूष्यन्त इति दूष्याः। एवञ्च रसादीनां दूष्यसंज्ञा धातुसंज्ञा च, विन्मूत्रादीनां तु मलसंज्ञा दूष्यसंज्ञा चेति[1]।" सोऽयं शारीरदूष्यसंग्रहः। मानसरोगेषु तु रजस्तमसी दोषौ, मनश्च दूष्यम्। तत्र दूष्यान्तरासम्भवात्। तत्सहगामिनी वातादिविकृतिस्तु भवत्येव प्रायस्तुल्यनिदानसम्भवत्वात्।

इदञ्चात्रावधेयम्। एतेषां रसरक्तादीनां दूष्याणां वातादिभिराश्रयाश्रयिभावोऽस्ति यनिष्ठः। यथाह वाग्भटः "तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः। श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणो मिथः। यदेकस्य तदन्यस्य वर्द्धन-क्षपणौषधम्। अस्थि-मारुतयोर्नैवम्।"—इति ( अष्टाङ्गहृ० सूत्र० ११अ० )। अतएव वातवृद्धौ अस्थि-पर्वभेदादि, पित्तवृद्धौ स्वेदरक्तदुष्ट्यादि लिङ्गं प्रायिकमित्याद्यनुव्याख्यास्यामः। दोषाणां सामता चाग्रे वक्ष्यमाणा अविपक्वान्नरससम्पर्कादेव विज्ञेया।

अथैवं दोषदूष्यसंग्रहमुपक्रम्य तत्स्थानान्याचष्टे—**तदधिष्ठानमिति।** तेषां दोषाणां दूष्याणाञ्चाधिष्ठानमाश्रयस्थानं पृथग्विधा आशया शास्त्रे समुपदिष्टाः प्रत्यक्षद्रष्टव्याः। अत्र आशेरते दोषधातुमला एषु—इति व्युत्पत्त्या आशयपदेन श्वसनान्नविपचनमूत्रोच्चारविभजन शोणितसंवहनादिक्रियाकराणां फुस्फुसाऽऽमाशयान्त्र वृक्कहृदयादीनां ग्रहणम्, आद्यपदेन सिराधमन्यादीनाञ्च। आशयवर्णनविस्तरस्तु अस्मदीय प्रत्यक्षशारीरे प्रतिपादितो द्रष्टव्यः। दिग्दर्शनार्थन्तु इहापि किञ्चिदुद्ध्रियते "आशया नाम--श्वसनान्नपचनशोणितसंवहनादिक्रियाकरा बहवः। तेषां तिसृषु गुहासु अवस्थानम्। तास्तु यथा—शिरोगुहा, उरोगुहा, उदरगुहा चेति। तत्र शिरोगुहायां मस्तिष्कमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च। तदेतत्त्रयं निखिलसंज्ञाचेष्टामूलं, येन सम्बध्यते निम्नतः सुषुम्नाकाण्डः[2] पृष्ठवंशान्तस्थः। सेयं प्रथमा शिरोगुहा व्याख्याता भवति। उरोगुहायां—फुस्फुसद्वयं हृदयञ्च प्रधानम्। तत्र श्वसनार्थौ फुस्फुसौ श्वासपथेन कण्ठाभिगतेनोरसि द्वैधाविभक्तेन प्रतिबद्धौ। शोणितसंग्रहणप्रेरणार्थकं हृदयं पुण्डरीकाकारं फुस्फुसयोरन्तरालस्थम्, तत्र प्रतिबद्धं महासिराद्वयं महाधमनीमूलं सिराधमन्यश्च यथास्थानं वक्ष्यमाणाः। सेयं द्वितीया उरोगुहा व्याख्याता भवति।

१। वातादीनां तु दोषसंज्ञा धातुसंज्ञा च, क्वचित् मलसंज्ञाऽपि— इत्यपूर्वम्। २। यद्यपि मध्ये कतिचित् नाडीकेन्द्रैरुपलक्षितः सोऽपि स्तोकेन संज्ञाचेष्टाधारः, तथापि मुख्यतया ऊर्ध्वाधोगामि-नाडीवर्त्मधर एवाऽयमिति प्रत्यक्षशारीरे द्रष्टव्यम्।

[ अथ विकृतवातादिकर्म्माणि ]

**दोषाणां विकृतिर्द्वेधा दूष्याणाञ्च तथा मता ।**
**क्षयजा वृद्धिजा चेति ज्ञातव्या सा प्रयत्नतः ॥ १४ ॥**

उदरगुहायां—भुक्तमात्रस्याधारो दृतिसमाकार आमाशयः, स नाभेरूर्द्ध्वं वामतो मध्यतश्च । पच्यमानस्य पक्वस्य चाशयः पक्वाशयः, स नाभेरधः परितश्च । पक्वाशयश्च मलाशयश्चान्त्राणि चेत्यनर्थान्तरम्' । पाचक-रञ्जक-पित्तयोः प्रभवो यकृत्, तत्र संलग्नः पित्तकोषः रञ्जकपित्तप्रभवः प्लीहा । यकृत्प्लीह्नोश्च स्थितिः क्रमेण दक्षिणतो वामतश्चामाशयात् । पृष्ठत आमाशयस्य कुठारिकाकारोऽग्न्याशयः । मूत्रप्रभवौ महाशिम्बीबीजाकारौ कीपौ वृक्कौ नाम कटिपार्श्वयोः । वृक्कप्रभवस्य मूत्रस्रोतोभ्यां समागतस्य मूत्रस्याशयो वस्तिर्नाम स नाभेरधः । योनेरूर्द्ध्वं मुखप्रतिबद्धः क्षुद्रकलशाकारो गर्भाशयः, स स्त्रिया एव । सोऽयं स्वमुष्टिमात्राकारोऽगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागममभिवर्द्धते । तस्य चोभयोः पार्श्वयो बीजकोषौ नाम, तौ बीजस्रोतोभ्यां प्रतिबद्धौ गर्भाशयेन—तावेव तु पुरुषस्य बहिःस्थितौ भवतः । तौ मुष्कौ नाम शुक्रप्रभवौ ( शुक्रवहस्रोतोभ्यां सहितौ ) । सेयं तृतीया उदरगुहा व्याख्याता । एतास्तिस्रो गुहा यासु निखिलाशयावरोधः ।"

अथ वातादीनां प्रसादमलभावाभ्यां स्थितानां प्राकृतं स्वरूपं निरूप्य सम्प्रति तद्विकृतेः दूष्यविकृतेश्च प्रकारद्वयं दर्शयति—**दोषाणामिति ।** दोषाणां वातपित्तकफानां दूष्याणां रसरक्तादीनाञ्च विकृतिः स्वभावविपर्य्ययो द्वेधा द्विप्रकारा सम्मताऽऽचार्य्याणाम्—क्षयजा वृद्धिजा चेति । तत्र क्षयो ह्रासः, वृद्धिरुपचयः प्रकोपो वा । न च प्रकोपो वृद्धेरतिरिक्तं किञ्चिदिति शङ्क्यम् । यत्तु चरके—"क्षयः स्थानञ्च वृद्धिश्च विज्ञेया त्रिविधा गतिः"रिति, तत्र स्थानमित्यस्य समत्वमित्यर्थः सम्प्रदायप्रसिद्धः । तेन क्षयवृद्धी विकृतिप्रकारभूते, समत्वञ्च प्राकृतमित्याचार्य्याणामभिप्रायः । ननु स्थानान्तरगमनमपि वक्तव्यं, यदाह चरकः—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये । स्थानादादाय गात्रेषु यत्र यत्र प्रसर्पति । तदा तोदश्च दाहश्च तत्र तत्रानवस्थितः' । गात्रदेशे भवेत्तस्य श्रमो दौर्बल्यमेव च ।" इति चेत् ?—मैवम् । दोषस्य उन्मार्गगमनमपि स्थानान्तरे वृद्धिरेव कोपापरपर्य्यायः, वृद्धेरेव वाऽसौ प्रकारभेदः । तथाच वाग्भटः "कोपस्तून्मार्गगामिता" इति । सेयं विकृतिः सर्वैः प्रयत्नैर्ज्ञातव्या ।

१ । तुल्यार्थकम् । २ । एतद्दृष्टान्ताश्च—विसूचिकादौ द्रष्टव्याः । विसूचिकायां हि तीव्रातीसारेण आप्यभागक्षयात् श्लेष्मक्षयः, ततश्च तोददाहादयः ।

सा भुक्तरसमूला स्यात् प्रायेण प्रकृतिर्यथा।
धातुवैषम्यजा रोगा आरोग्यं धातुसाम्यजम्॥ १५॥

अथ विकृतिमभिधाय तन्निदानं व्याचष्टे--सेति। सा विकृतिर्दोषाणां दूष्याणाञ्च प्रायेण भूम्ना, भुक्तरसमूला प्रकृतिवत्। यथा भुक्तरसा मधुराद्याः (देश कालादयश्च) सम्यगुपयुक्ताः दोषाणां प्रकृतिं स्वाभाविकमात्रावस्थितिं जनयन्ति, विकृतिमपि तथैव दुरुपयुक्ता।—इति निष्कर्षः। तथाच चरकः—'तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति। यथा कटु तिक्त कषाया वातं जनयन्ति, मधुराम्ल-लवणास्त्वेनं शमयन्ति। कटुकाम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनं शमयन्ति। मधुराम्ललवणाः श्लेष्माणं जनयन्ति कटुतिक्तकषायास्त्वेनं शमयन्ति" इति (च० वि० १ अ०)। इह जनयन्तित्यस्य बृंहणाणुकैर्वर्धयन्तीत्यभिप्रायः। तच्च वर्धनं स्वाभाविक-बृंहणमात्रं चेत् प्रकृतिः, न्यूनाधिकमात्रञ्चेद् विकृतिः। बृंहणप्रयोजनन्तु नित्यापचयपूरणाय। अतएव सुश्रुतः—"अविदग्धः कफं पित्तं विदग्धः पवनं पुनः। सम्यग् विपक्वो निःसार आहारः परिबृंहयेत्॥" (सु० सू० ४६)
ननु वातादयः प्राणभृतां देहे नित्या इत्यभिहितं, कथं तर्हि तेषां वृद्धि-क्षयौ—इति चेत् शृणु। देहे स्थूलशरीरे नित्याः यावच्छरीरास्थानाः--इत्यापेक्षिकं नित्यत्वम्, गर्भोत्पत्तिकालादामरणं दोषावस्थितेः। ते च नियतं क्षयवृद्धिशीलाः स्रोतस्वतीजलवत् दिनर्त्तु-मिथ्याहार-विहारहेतोः यत्प्रतीकाराय दिनचर्य्यादि-व्यवस्था प्राचाम्।

नन्वमूर्त्तस्य वायोरतीन्द्रियावस्थयोः पित्त-कफयोश्च कथङ्कारं ज्ञायेयातां क्षयवृद्धी—इति चेत्, उच्यते। यथा हि अतीन्द्रियाणां सत्त्वरजस्तमसां स्वाभाविक-कर्मापचयोपचयदर्शनादनुमीयेते क्षयवृद्धी, तद्वदिहापि ज्ञायेयाताम्, स्थूलपित्त-कफयोर्मात्राक्षय-वृद्धिदर्शनाच्च।

अथ क्षयवृद्ध्योः फलमाह—धातुवैषम्यजा इति। वैषम्यं क्षयवृद्ध्यात्मकं, तच्च धातूनां वातादीनां रसादीनाञ्च। धातुशब्देन सर्वेषामेषामुपादानात्। तज्जातास्तत्-समुत्था हि रोगा व्याधयो वक्ष्यमाणस्वरूपाः। आरोग्यं रोगाभावः स्वास्थ्यं, तद् धातुसाम्यजम्, धातूनां स्वाभाविकपरिमाणावस्थानस्य फलभूतम्। न च साम्यं नाम धातूनां परिमाणसमत्वमिति संशयितव्यं, तेषां पुरुषे स्वभावतः, आहार-विहारादि-भेदतश्च परिमाणभेदस्य नियमात्[२]। तेन साम्यं नाम वैकारिक-

१। निःसृष्टसारो निःसार, समर्पितसार—इत्यर्थः। २ सुश्रुताद्युक्तमञ्जलिपरिमाणं तु प्रायिकम्।

( तत्र दोषक्षयलिङ्गानि )

तत्र वातक्षये मन्दचेष्टता वचसोऽल्पता।
अल्पहर्षः प्रमोहश्च श्लेष्मवृद्धेश्च लक्षणम् ॥ १६ ॥
पित्तक्षये तु मन्दोष्मा मन्दाग्नित्वं प्रभाल्पता।
श्लेष्मक्षये रूक्षताऽन्तर्दाहस्तृष्णा च जागरः ॥ १७ ॥
अन्यत्राऽऽमाशयात् सर्वाशयानां शिरसस्तथा।
शून्यता सन्धिशैथिल्यमिति लिङ्गानि षड् विदुः ॥ १८ ॥

---

वैषम्याभाव इति वाच्यम्। सुश्रुतश्चाह— 'वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च। दोष-धातु-मलानान्तु परिमाणं न विद्यते।" इति ( सु० सूत्र० १६ अ० )। आयुर्वेदप्रयोजनञ्च वैकारिक-वैषम्यनिवारणमाहुः, तदुक्तम्—"क्षीणा वर्द्धयितव्याः" इत्यादि ॥ १५ ॥

अथ सौश्रुत-वचोऽनुवादेन क्षयवृद्धिलिङ्गेष्वादौ क्षयलिङ्गानि वक्तुमुपक्रमते वातादिक्रमेण—तत्रेति। तत्र धातुवैषम्यप्रकारेषु मध्ये वातस्य पूर्वोक्ता-चिन्त्याऽतीन्द्रिय-शक्तिकस्य क्षये सति मन्दचेष्टता उत्साहोच्छ्वास-निःश्वासादीनां स्वाभाविक-कर्मणां मन्दता। वचसो वाक्स्फुरणस्याल्पता। अल्पहर्षो विषाद-प्रवणता, स्त्रीषु प्रहर्षमान्द्यञ्च। प्रमोहः प्रमूढप्रायसंज्ञता, नव मूर्च्छा। श्लेष्म-वृद्धिलिङ्गानि च वक्ष्यमाणानि शैत्य-श्वैत्यादीनि सम्भवन्तीति शेषः। तदेतद् बीज रूपेण वातक्षयस्य लक्षणम्। वाग्भटश्चाह—'लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्प भाषितेहितम्। संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसम्भव" इति ( अष्टाङ्ग हृ० सूत्र० ११ अ० )। सोऽयं संक्षेपो वातक्षयलिङ्गानां सङ्ग्रहः। विस्तरस्य तु न प्रमाणमस्ति,—य खल्विह सर्वतन्त्र-यन्त्रेषु स्वाभाविक-क्रियाल्पतालक्षणमग्निमान्द्य करकम्पाद्यनेकरूपं स्वरूपेणाऽनाकलयन्तः क्रियासु विमुह्यन्ति स्वल्पधियः ॥ १६ ॥

पित्तक्षये इति। मन्दोष्मा स्वाभाविक-शरीरसन्तापस्याल्पता। मन्दा-ग्नित्वं क्षुधायाः अन्नजरणशक्तेश्चाल्पता। प्रभाल्पता कान्तेरल्पता, स्वाभाविक-देह-मार्द्दवाभावात्, प्रभायाः भ्राजक पित्तकृतत्वाच्च। एतत्त्रयञ्च बीजरूपं लिङ्गमुक्तम्, विस्तरतस्तु दृग्शिशक्तिह्रासो मनःप्रसादाभावो मेधाल्पतादि[१] चेत्यादि पूर्वोक्त-स्वाभाविक-पित्तकर्मणां स्वाल्पक्षण्यहानिरूपं समुन्नेयम्।

अथ श्लेष्मक्षयलिङ्गान्याह—श्लेष्मेति सौश्रुतवचसैव। रूक्षता स्नेहाभावः

---

१। आलोचक पित्तादीनां क्षयादिति भावः।

( अथ दोषवृद्धिलिङ्गानि )

वातवृद्धौ परुषता त्वचः कार्श्यञ्च कृष्णता।
गात्राणां स्फुटनञ्चोष्णकामिता चाल्पनिद्रता।
बलाल्पत्वं तथा गाढवर्च्चस्त्वं जागरादि च॥ १९॥

---

अन्तर्दाह, तृष्णा चेति त्रय स्वाभाविकसोमगुणक्षयजम्। जागरो निद्राविरहः, निद्रायास्तम.प्रभवत्वात् तमोगुणाधिकश्च श्लेष्मेत्यत्रोचाम। अन्यत्रामाशयादिति- उरः शिरश्चामाशयश्चेति त्रयाणा श्लेष्मस्थानानां मध्ये आमाशयस्य न भवति शून्यता, उर.शिरसोस्तु स्वाभाविक-बोधन-तर्पण-श्लेष्मक्षयाद्ध भवत्येवेत्यभिप्रायः। नन्वामाशयेऽपि क्लेदनश्लेष्मणोऽल्पत्वाच्छून्यतैव स्यादिति चेत्, उच्यते। श्लेष्मक्षये तृष्णाधिक्येन जलादिपानाधिक्यात् तत्र प्रायः पूर्णतैव स्यादिति विचार्य्यैवाऽह— अन्यत्रामाशयादिति। तदेतत् सौश्रुतमतम्। वाग्भटस्तु अविशिष्य सर्वश्लेष्मा- शयाना शून्यत्वमाह यथा—"कफे भ्रमः। श्लेष्माशयानां शून्यत्व हृद्द्रव- श्लथसन्धिताः।" इति ( अष्टाङ्ग० हृ० सूत्र० ११ अ० )। सन्धिशैथिल्यं सन्ध्यन्तः- स्थित-श्लेष्मधर कलासु श्लेषक श्लेष्मणोऽल्पत्वात्। तदेतल्लिङ्गषट्कं सामान्यादव- गन्तव्यं, विशेषतस्तु बल वृषता स्थैर्य्यादि ह्रास· किञ्चिद्द वात-पित्तवृद्धिलिङ्गानि च समुन्नेयानि॥ १७। १८॥

अथ वृद्धिलिङ्गान्याह पुन· सौश्रुतवचाऽनुवादेनैव—**वातवृद्धाविति**। वातवृद्धौ वायुप्रकोपे सति त्वचः परुषता रूक्षता। कार्श्य कृशता शरीरस्य। कृष्णता श्यामाभता विण्मूत्रनखचर्मणाम्। गात्राणा स्फुटनमङ्गमर्दः। उष्णकामिता वायोः स्वाभाविक शैत्याधिक्यप्रतीकाराय उष्णाशनवसनादेराकांक्षा। गाढवर्च्चस्त्व पुरीषस्य कठिनी भाव। जागरः निद्राल्पत्वम्। आदि चेत्यन्येषामसख्यानां वातवृद्धिलिङ्गानां ग्रहणम्। तथाहि तद्विस्तरवर्णनपरं सुदान्तसेनकृत प्राचीनपद्यद्वयम्—"आध्मान- स्तम्भ-रौक्ष्य-स्फुटन-विमथन क्षोभ-कम्प प्रतोदा·, कण्ठध्वसावसादौ श्रमक-विलपनं स्रस शूल प्रभेदा.। पारुष्यं कर्णनादो विषयपरिणति भ्रंश दृग्विभ्रमोहो, विस्पन्दोद्- घट्टनानि ग्लपनमशयनं ताडन पीडनञ्च॥ नामोन्नामौ विषादो भ्रमपरिपतनं जृम्भणं रोमहर्षौ विक्षेपाऽक्षेप शोष-ग्रहण-शुषिरता च्छेदनं वेष्टनञ्च। वर्ण श्यावोऽरुणो वा तृडपि च महती स्वापविश्लेष सङ्गा, विद्यात् कर्म्माण्यमूनि प्रकुपित मरुतः स्यात् कषायो रसश्च"॥ इति। अत्र चैतावान् विशेषो लक्षणीय· - परुषतादीनि ·· नि लिङ्गानि निरामवायोरेव, आध्मानशूलादीनि कानिचित् तु सामवायोः।

पित्तवृद्धौ तु सन्तापः पीतभाः शीतकामिता।
पीतविण्मूत्रता दाहः स्वेदाद्या चाकृतिः स्फुटा ॥ २० ॥
श्लेष्मवृद्धौ भवेत् शैत्यं श्वैत्यं गौरवमेव च।
तन्द्राऽवसादः स्तैमित्यं प्रसेकश्च श्लथाङ्गता ॥ २१ ॥

---

सुदान्तसेनीय- पद्येषु तु सर्वत्र द्विविधानामपि लिङ्गानां समावेशः। इह तु साम निराम-लक्षणविवेकोऽग्रे पृथग् वक्ष्यते ॥ १९ ॥

**पित्तवृद्धाविति।** सन्ताप, स्वाभाविक- सन्तापस्याधिक्य हस्तपादनेत्रदाह-लक्षणं, ज्वरलक्षणं[1] वा वृद्धेस्तारतम्येन। पीतभाः, त्वच पीतद्युतिः। शीत-कामिता, सन्तापहरणाथ शीतस्पृहा। पीतविण्मूत्रता स्वाभाविकाधिका। दाहः करचरणादीनाम्। स्वेद· घर्माधिक्यम्। आकृतिलिङ्गम्। विस्तरस्तु सुदान्तसेनीये पद्येषु यथा—"विस्फोटाम्लक-धूमका· प्रलपन[2] स्वेदस्रुतिर्मूर्च्छन, दौर्गन्ध्यं दरण मदो विसरणं पाकोऽरतिस्तृड्भ्रमौ। ऊष्माऽतृप्ति-तम प्रवेश-दहनं कट्वम्लतिक्ता रसा, वर्णं पाण्डुविवर्जितः कथितता कर्माणि पित्तस्य वै ॥" इति। ननु सुश्रुते पीत-विण्मूत्र-नेत्रत्वमित्युक्त, तत् कथमिह पीतनेत्रता नोच्यते? शृणु। कामलायामेव पितनेत्रता भवति, न सर्वत्र पित्तकोपे। सा च प्रायेण ग्रहण्यां पित्तनिःस्रवनिरोधेन सम्भवति, याकृतपित्तस्योन्मार्ग-गमनात्। न च तत्र पीतविट्कता प्रायः पीत्तनिःस्रव-निरोधात्। अतो युगपन्नोक्तम् ॥ २० ॥

**श्लेष्मवृद्धाविति।** शैत्य शीताधिक्यम्। श्वैत्य श्वेताभता विन्मूत्र-नेत्र-चर्मणाम्। गौरव गात्राणाम्। तन्द्रा निद्रासङ्ग। स्तैमित्य गात्राणामार्द्र-पटाव गुण्ठितवत् प्रतीति। प्रसेको मुखे लालाधिक्यं यावत् प्रतिश्यायोऽपि। श्लथा-ङ्गता अङ्गाना शिथिलीभाव·। तान्येतानि संक्षेपतो लिङ्गानि। विस्तरतस्तु यथा—"तृप्तिस्तन्द्रा गुरुता स्तैमित्यं कठिनता मलाधिक्यम्। स्नेहाऽपक्त्युपलेपा·, शैत्यं कण्डू प्रसेकश्च। चिरकर्तृत्वं शोथो, निद्राधिक्य रसौ पटुस्वादू। वर्ण श्वेतोऽलसता कर्माणि कफस्य जानीयात्"—इति सुदान्तसेनः।

तान्येतानि वातादीनामेकैकस्य क्षय-वृद्धि-लिङ्गान्यभिहितानि। द्वयोः संसर्गे

---

१। स्वाभाविक सन्तापस्तु आधुनिक-तापमानयन्त्र-परिमाणेन ९७॥ डिग्रीतः ९८॥ डिग्री-प्रमाण जिह्वाध·, कक्षायान्तु किञ्चित् न्यूनम्। २। प्रलपनम्—उद्दामप्रलाप· यथा उन्मत्तस्य; विलपनन्तु विषण्णस्यैव।

( अथ दोषाणां समता-निरामतादि )

ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २२ ॥
आमेन तेन संयुक्ता दोषा दूष्याश्च दूषिताः ।
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ २२ ॥

---

त्रयाणां सन्निपाते वा यथासम्भवं लक्षणानामपि साङ्कर्य्यमुन्नेयम् । तदुक्तम्— "द्विदोषलिङ्गः संसर्गः सन्निपातस्त्रिलिङ्गकः'—इति । इदञ्च सामान्यतः सर्वलिङ्गसंग्राहकं सूत्रमाहुराचार्य्याः— "दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् । क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म कुर्वते ॥' इति ( सु० सूत्र० १७ अ० ) ॥ २१ ॥

अथ प्रवृद्धानां दोषाणां साम-निरामता भेदात् लक्षणेषु वैशेष्यं दर्शयितुमुपक्रममाण आदौ तावदामपदार्थं व्याचष्टे—ऊष्मण इति । ऊष्मणः कायाग्नेरल्पबलत्वेन दौर्बल्येन । अल्पबलत्वञ्चेदमाहारापेक्षया । यस्य ह्यग्निर्यावन्तमाहारं सुखेन जरयति तस्य तावद्बलोऽग्निरुच्यते । स चेदधिकमाहारं मात्रागुरुं वा द्रव्यगुरुं वा भुङ्क्ते, न तं सुखेन जरयतीति तस्य स्वाभाविकोऽप्यग्निस्तदाहारापेक्षया अल्पबलः । तस्मात् प्रागसत्यपि अग्निमान्द्ये आहारादिदोषादग्निशक्तेरतिक्रमणेन—इत्यभिसन्धिः । आद्यं धातुं रसाख्यम् । अपाचितं सम्यगपरिणतम्, अतएव दुष्टं विकृतम् । आमाशयगतमामाशयादुत्थितम् । न त्वामाशय एवाऽवतिष्ठमानम्, रसस्य सर्वशरीरचरत्वात् । स हि आमाशयादेरुद्भूय रसवहस्रोतोभिर्यकृदादिमार्गेण हृदयं प्रविशति, चरति च क्रमात् कृत्स्नमपि देहमभिव्याप्य रक्तेनाऽपृथग्भूय[1] । तथाचाहुः— "कृत्स्नदेहचरस्यापि रसस्य हृदयं स्थलम् । पूर्वं समानमरुता यदयं हृदये धृतः ॥" अन्यत्र चोक्तम्— "आरह्य धमनीर्गत्वा सर्वान् धातूनयं रसः"—इत्यादि । वाग्भटोऽप्याह—"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥" इति ( अष्टाङ्ग० हृ० शा० ३ अ० ) । तस्मात् दुष्टरसस्य सर्वशरीरचरस्य सम्पर्कात् समानकारण-प्रवृद्धानां दोषाणामपि सर्वदेहचराणां विशिष्टानि लिङ्गानि कृत्स्नेऽपि देहे द्रष्टव्यानीति तत्त्वम् ॥ २२ ॥

अथ शास्त्रे व्यवहारार्थं सामेतिपदमपि स्पष्टं निर्वक्ति—आमेनेति । तेन आमेन दुष्टरसेन संयुक्ता अतएव दूषिता दोषा वातादयो दूष्या रक्तादयश्च । रसस्य आमपदेनैव ग्रहणात् दूष्यपदेन नेह रसस्य ग्रहणम् । केचित्तु आमपदार्थं विपा—

---

[1] । रसरक्तसंवहनप्रकारविस्तरः प्रत्यक्षशारीरे धमनीखण्डादौ द्रष्टव्यः ।

"स्रोतोरोध-बलभ्रंश-गौरवानिलमूढताः।
आलस्याऽपक्ति-निष्ठेव-मलभेदारुचिक्लमाः।
लिङ्गं मलानां सामानां निरामाणां विपर्य्ययः" ॥ २४ ॥
वायुः सामो विबन्धाऽग्निसाद-तन्द्राऽन्त्रकूजनैः।
वेदना-शोथ-निस्तोदैः क्रमशोऽङ्गानि पीडयेत् ॥ २५ ॥

---

त्मक रसस्यं पृथङ्मत्वा रसः साम' इति काचित्कं व्यवहारं समर्थयन्ते। सामा इत्युपदिश्यन्ते—सामसंज्ञया शास्त्रे व्यवह्रियन्ते। ये च रोगा इति। तदुद्भवाः सामदोषादि-कृता रोगा अपि उपचारात् सामा इत्युच्यन्ते –यथा सामोऽय ज्वर., सामोऽसावतीसार इत्यादि॥ २३॥

अथ सामदोषाणां सर्वसाधारणानि लिङ्गान्याह- स्रोतोरोधेति। स्रोतोरोधो विण्मूत्रादि-स्रोतसां रुद्धवद्भावः सुखेनाऽप्रवृत्तिरिति यावत्। पारमार्थिक-स्रोतोरोधे तु दारुणो मारको वा रोग.। बलभ्रंशोऽकस्माद्व बलहानि.। गौरव शिर.कोष्ठादीनाम्। अनिलमूढता वायो किंकर्त्तव्यविमूढतेव, आनुलोम्याभावः स्तब्धता वा। आलस्यमनुत्साहः। अपक्ति अन्नविपाकस्य मन्दता। निष्ठेवो मुखप्रसेक। मलभेद. अतीसारः। ननुस्रोतो रोधेन मलविबन्ध एवोक्तः, कथ पुनरतीसारोऽपि? उच्यते। सविबन्धोऽतिसार, उदावर्त्तो वा—इत्यवस्था-भेदेनोभयोः सम्भव इति न दोष। अरुचिरन्नस्याऽनभिनन्दनम्। क्लमः अकृतश्रमस्यापि श्रमबोधः। तान्येतानि लिङ्गानि प्राय' सर्वत्रैव दोषसामतायां सम्भवन्तीति सामान्यतो निदर्शनि—लिङ्ग मलानां सामनामिति। एकवचनेन प्रायिक यौगपद्यं लिङ्गानां विवक्षितम्। निरामाणा दोषाणान्तु विपर्य्यय. सत्स्वपि दोषवृद्धि-लिङ्गेषु स्रोतोरोधादीना वैपरीत्यमभाव एव किञ्चिद्भावो वा। यथा चैतत् तथाऽनुपदमेव प्रतिपादयिष्यते॥ २४॥

तत्र सामवायोर्लिङ्गान्याह—वायुरिति। विबन्ध स्रोतोरोधो वायोरानु-लोम्यभावात् मलादेः कृच्छ्रेण वा नैव वा प्रवृत्ति.। अग्निसाद' पाचकाग्नेर्मन्दी-भाव.। अन्त्रकूजनमन्त्रेषु गुडगुडाशब्द, स च मलोद्भूत-वाष्पस्याधिक्येनोद्ध्वाद्ध-निर्गमाच्च भवति। वेदना यतस्ततः कटी-पार्श्वादि-पीडा, कर्त्तनवत् पीडा वा। शोथ. शूनत्वं, यथा आमवातादौ सन्धिषु। निस्तोद सूचीवेधवद्व व्यथा। क्रमश-इत्यनेन आदौ विबन्धादीनि लिङ्गानि कोष्ठे दर्शयित्वा अकृतप्रतीकारो वायु. क्रमात्

फेनवान् पिण्डितः पाण्डुनिःसारोऽगन्ध एव च ।
पक्वः स एव विज्ञेयश्छेदवान् वक्त्रशुद्धिकृत् ॥ ३१ ॥

( अथ दूष्यक्षयलिङ्गानि )

रसे क्षीणे श्रमः शोषो रौक्ष्यं शब्दासहिष्णुता ।
रक्तेऽम्ल-शिशिरप्रीति-सिराशैथिल्यरूक्षताः ॥ ३२ ॥
मांसेऽक्षग्लानि-गण्डस्फिक्शुष्कता-सन्धिवेदनाः ।

अथ निरामश्लेष्मलक्षणमाह—फेनवानित्यादि । पक्वः निरामः स एव फेनवानीषत्फेनिलस्तन्तुलत्वाल्पत्वात पिण्डितश्च । पाण्डुरीषत्पीताभश्वेतः । निःसारो लघुर्जले प्रतरणशीलः । अगन्धो गन्धरहित' छेदवान् अनुपलेपो, कासतः पुंसः शीघ्रमेव निःसरणशील' । वक्त्रशुद्धिकृत् मुखस्य विशदताप्रदः, पैच्छिल्याप-गमात् । नन्वेवंविधोऽपि श्लेष्मा मलभूत एव शरीरबाधकरत्वात् ? सत्यं, सामावस्थाया पैच्छिल्यादियुतः स एव श्लेष्मा पक्वावस्थायामेवंविधो निरेति । सर्वथा दोषशुद्धौ तु प्रायो विलीयत एव सः, तिष्ठति तु केवलमलक्ष्यप्रायः स्वाभाविकस्नेहन-तर्पणश्लेष्मरूपेणेति विवेक' ॥ ३१ ॥

अथ दोषाणा क्षय-वृद्धिलिङ्गान्यभिधाय दूष्याणा धातु मलाना क्षय-वृद्धि लक्षणान्याचष्टे वाग्भटानुसारिवचनैः—रसे इत्यादिभिः । श्रमः, अकृतश्रमस्यापि श्रान्त्यनुभवः । शोषः - शरीरस्य शुष्कता, नीरसवत् प्रतीतिः । रौक्ष्यं—रूक्षता निःस्नेहता बहिरन्तश्च । शब्दासहिष्णुता बालरोदनादिश्रवणमात्रेणापि हृद्व्याकुलता । अतएव सुश्रुतः "रसक्षये हृत्पीडा कम्प शोषः शून्यतास्तृष्णा च" इति ( सु० सूत्र० १५ अ० ) । तृष्णाकम्पयोः सम्भवश्च अतिमात्ररसक्षये इति स्मर्त्तव्यम् । रक्ते—इति । क्षीणे इति सर्वत्रानुवर्त्तते । सिराशैथिल्यं[१] सिरासु पूर्णरक्तप्रवाहाभावात् सिरा-धमनीप्राचीरिकाणा स्थितिस्थापकत्वदौर्बल्याद् वा अतिमृदुस्पर्शतारुपम् । अत्र सिरापदं सिरा धमनीना वाचकमुपलक्षणेन । सुश्रुते तु पृथगभिहिता धमनीनां कोमलता यथा—शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं धमनीनामतिमृदुलस्पर्शता" इति । मांसे—इति । अक्षग्लानि-रिन्द्रियदौर्बल्यम् । गण्डस्फिक्शुष्कतेति, मांसलप्रदेशाना शोष इति यावत् । स्फिग् नितम्बः । सन्धिवेदना मांसपेशीना दौर्बल्यात् स्वल्पेऽपि श्रमे तत्संवृतसन्धिषु रुजाप्रादुर्भावः, न ह्यत्र राग शोफवती वेदना भवति । सुश्रुतस्तु सविस्तरमाह—

१ । यथा रक्तस्रावे विषूचिकादौ वा । सिराशैथिल्यम् Low blood-pressure

मेदसि प्लीहवृद्धिश्च रुज-सुप्त-कृशाङ्गता ॥ ३३ ॥
अस्थ्न्यस्थितोदः शातश्च दन्तकेशनखादिषु ।
अस्थ्नां मज्जनि सौषिर्य्यं भ्रमस्तिमिरदर्शनम् ॥ ३४ ॥
शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयो-र्मेढ्रं धूमायतीव च ॥ ३५ ॥
पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव ।
कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीड़यन् भृशम् ॥ ३६ ॥

---

"मांसक्षये स्फिग् गण्डौष्ठोपस्थोरु-वंक्षण कक्षा पिण्डिकोदर-ग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदन धमनीशैथिल्यञ्च"—इति। मेदसि—इति। मेदसि क्षीणे प्लीहवृद्धिश्चेति चकारात् मांसक्षयलिङ्गान्यपि भवन्ति। ननु विषमज्वरादौ प्लीहवृद्धिः मेदस्विनः क्षीणस्य च द्रागेव भवति, सा कथङ्कारं व्याख्येयेति चेत्, शृणु। तत्र ज्वरकरसूक्ष्मक्रिमीणां प्लीहाश्रयणात् आदौ प्लीहशोथस्तेन किञ्चित् प्लीहवृद्धिः, ततश्च क्रमेण रस-रक्त मांस मेद क्षयाद् विशिष्टा प्लीहाभिवृद्धिः, सा च क्षीणमेदसां तूर्णमेव भवति। सुप्ताङ्गता सञ्ज्ञावहनाड़ीनां क्षीणत्वात्। यावत् चेष्टावहनाडीनामपि तथात्वात् चेष्टादौर्बल्यञ्च। सन्धिवेदना चात्रापि प्राय. सन्धिवेष्टनमेदोमांसक्षयात् श्लेषकश्लेष्मणोऽल्पत्वाच्च श्रमोत्थ-रुजारूपा। तत्र तर्पणी चिकित्सा चतु.स्नेहादिमर्द्दनेन स्निग्धान्नपानादिभिश्च कर्त्तव्या। अतएवात्र "मेदुरमांसप्रार्थना चे"ति सुश्रुतेनाभ्यधायि ॥ ३२—३३ ॥

अस्थ्नि—इति। अस्थ्नां तोद तेषु सूचीशतवेधनवत् पीड़ा। शातः, दन्तादीनां पात. शीर्णता वा। अतएव सुश्रुत - "अस्थिक्षये अस्थिशूलं दन्तनखभङ्गश्च"—इति। अस्थ्नाम्—इति। मज्जनि क्षीणे अस्थ्नां सौषिर्य्यमिति योजना। तच्च तेषां प्रायेण घुणभक्षितवंशवत् निःसारता भङ्गुरता च। शुक्रे—इति। शुक्रे क्षीणे चिरात् प्रसिच्यते शुक्रं शोणितं वा व्यवायत', न च तत्र व्यवाये सुखानुभवोऽपि स्वाभविको भवति। मेढ्रं धूमायतीव, अत्युष्णधूमसन्तप्तमिवानुभूयते ॥ ३४—३५ ॥

अथ मलानामपि दूष्यत्वात्तत्रैव पुरीष-मूत्र-स्वेदादीनां क्षयलिङ्गान्याह पुरीष—इत्यादिभिः प्राचां श्लोकैः। अथात्र जिज्ञासा—कथन्तावद् मलानां दोषाणां च क्षय, सम्यगनुत्पत्त्या वा बहुप्रवृत्त्या वा? तत्र ब्रूमः। उभयथापि क्षयो भवति, असम्यगुत्

मूत्रेऽल्पं मूत्रयेत् कृच्छ्राद् विवर्णं सास्रमेव वा।
स्वेदे रोमच्युतिः स्तब्ध-रोमता स्फुटनं त्वचः॥ ३७॥

(अथ दूष्यवृद्धिलिङ्गानि)

रसः प्रवृद्धो लिङ्गानि श्लेष्मवत् कुरुते भृशम्।
रक्तं तु वृद्धं जनयेद्ध धमनीनां प्रपूर्णताम्॥

पत्त्या च बहुप्रवृत्त्या च। यथा ग्रहण्यादौ शोणितस्य असम्यगुत्पत्त्या पाण्डुता, सा पूर्वस्थितस्य स्वाभाविकशोणितस्य धातुभिरुपयुज्यमानस्य पुनरापूरणाभावात्, यथा च रक्तपित्ते रक्तार्शसि वा बहुतरशोणितप्रवृत्त्या शोणितक्षयात् पाण्डुता। तस्मात् सम्यगनुत्पत्तिर्बहुप्रवृत्तिर्वा क्षयहेतुभूता, क्षयस्तु फलमिति तत्त्वम्। स एव न्याय इहापि सर्वत्र योज्यः। ननु नायं न्यायो मलपक्षे घटते, रसादीना शरीरपोषण-कर्मतया इष्टत्वात्; मलानान्तु शरीरदूषणकर्मतया अनिष्टत्वात्—इति चेत्? मैवम्। मला हि मूत्र पुरीपदायः शारीरं त्याज्यभाग विषभूतं बहिर्नयन्ति, ते चावरुद्धाः शरीरे तद्विपोपचयमापादयन्ति, अतिप्रवृत्तास्तु न केवलं शारीरविष किन्तु शारीरधातूनपि विशेषतश्च किट्टभाग निःसारयन्ति। असम्भवन्तश्च स्वेदमूत्रादयः शारीरविषम-निष्काशयन्तो बहुविधान् रोगान् जनयन्ति यथा मूत्राघाते भ्रमाऽक्षेपादीन्। तस्मान्मलाना न सर्वथा अनिष्टत्वम्। पुरीषपक्षे परमेको विशेष। पुरीषस्य क्षयो बहुप्रवृत्त्येव प्राय, न पुनरनिष्पत्त्या। अभुञ्जानस्य तु सर्वधातुक्षयेण सह अनिष्पत्तेर्वा कथञ्चित् पुरीषक्षयः। मूत्रक्षयस्तु अल्पप्रवृत्त्यादिलक्षणः मूत्रस्य स्वल्पनिष्पत्त्या। मूत्रस्य बहुप्रवृत्त्या तु काले मूत्रक्षय—यथा मधुमेहादौ।

अथ अतीसारादिभि. **पुरीषे** क्षीणे कुक्षौ वायुर्भ्रमति अन्त्राणि वेष्टयन्निव। किञ्चात्र हृत्पार्श्वपीडापि वायुना महाप्राचीरायाः प्रतिघातेन, आमाशयस्य प्रतिलोमसङ्कोचेन च, यावद् दौर्बल्यमपि। **मूत्रे**— इति। मूत्रे क्षीणे मूत्राघातादौ। कृच्छ्राद् बहुप्रयत्नेन। मूत्राघातश्च वृक्कयोर्मूत्रप्रभवयोः क्रियाप्रतीघातजन्यः। मूत्रकृच्छ्ररोगस्तु पृथगेव, तत्र हि मूत्रप्रसेकाल्य मूत्रनालस्य संकोचतः कृच्छ्रेण मूत्रनिर्गम। **स्वेद** इति। स्वेदक्षये स्वेदाऽनिष्पत्ते रोम्णां मूलशोपात् पातः, कर्कशत्वात् स्तब्धता च। त्वचश्च स्नेहमार्दवाभावात् स्फुटितत्वम्॥ ३६—३७॥

अथ दूष्याणा क्षयलिङ्गान्यभिधाय तेषां वृद्धिलिङ्गान्याह **रसः प्रवृद्ध**—इति। रस प्रवृद्धः सन् श्लेष्मवत् लिङ्गानि कुरुते। श्लेष्मवृद्धौ यानि लिङ्गानि शैत्य—

पित्तवृद्धेश्च लिङ्गानि व्रण-वीसर्प-विद्रधीन्।
कुष्ठ-वातास्र-पित्तास्र-रक्तत्वङ्-नेत्र-मूत्रताः ॥ ३८।३९ ॥
मांसं गण्डाऽर्बुद-ग्रन्थि-गण्डोरूदरवृद्धताम्।
कण्ठादिष्वधिमांसं च, तद्वन्मेदस्तथा श्रमम्।
अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलम्बनम् ॥ ४० ॥

---

श्वैत्यादीनि पूर्वोक्तानि तान्येव भृशं जनयतीत्यर्थः। ननु वातक्षयेऽपि श्लेष्मवृद्ध्युक्तामयसम्भवः स्यादित्युच्यते वाग्भटादिभिराचार्य्यैः, तत् कथङ्कार ज्ञायता रसवृद्धिर्जाता,वातक्षयोवेति चेदुच्यते। वातक्षये अल्पं भाषितेहितं, स्वल्पेनापि श्रमेण अवसादः, शब्दादीनामसहिष्णुतेत्येवमादीनि लिङ्गानि दौर्बल्यविशेषश्चेति विशेषः। रसवृद्धौ तु हृल्लास-प्रसेकादीनामधिक्यम्। श्लेष्मवृद्धेर्भेदस्तु प्रतिश्यायादिलिङ्गैः। वस्तुतस्तु दुष्करमेव प्रायेण तद्भेदाकलनम्। अपतर्पणादि चिकित्सा तु समाना।

अथ **रक्तं** वृद्धं सत् धमनीना प्रकर्षेण पूर्णता[1] रक्तसम्पीड़नाधिक्य जनयेत्, पित्तवृद्धिलिङ्गानि च। ते च व्रणा वीसर्पः विद्रधिश्चेति त्वङ्मासादिविकाराः सामान्यत। वातास्र वातरक्तं, पित्तास्रं रक्तपित्तमित्यर्थः। ननु पित्तवृद्धिलिङ्गेषु पीतविण्मूत्रतोक्ता, इह तु रक्त त्वङ् नेत्र-मूत्रतोच्यते इति स्वोक्तिविरोधः—इति चेत्। सत्यम्, रक्तवृद्धावय विशेषः ॥ ३८—३९ ॥

अथ **मांसं** वृद्ध सत् गण्डादीन् रोगान् करोति। अत्र गण्डशब्देन गलगण्डो गण्डमाला च गृह्यते—इत्यरुणदत्तः। तच्चिन्त्यम्। मासक्षीणेष्वेव गण्डमालाना प्रायोदर्शनात्, गलगण्डस्य वातश्लेष्ममेदोदुष्टिहेतुकत्वाच्च। वस्तुतस्तु, इह गण्डशब्देन पिड़कोच्यते, तथैव दर्शनात्। तथाच विश्वः—"गण्डःकपोले पिड़के योगभेदे च गण्डके" इति। गम्भीरव्रणादीना प्रायेण मेदोमासदोषत एव सम्भवाच्च। अग्रे द्वितीयपादे तु गण्डोरूदरवृद्धतामित्यस्य गण्डादिषु अवयवेषु मासवृद्धि करोतीत्यर्थः। कण्ठादिषु च अधिमासं ग्रसनिकादौ मासाकुरान् कण्ठशालूकञ्च कुरुते। **मेदस्तु** वृद्धं अल्पेऽपि चेष्टिते श्रमं श्वासं च करोति, तथा स्फिको स्तनयोरुदरस्य च

---

१ धमनीप्रपूर्णता = High Blood-pressure सा च प्रायेण बहुभोजिनाम्, फिरङ्गादि रोगिणाञ्च।

[ अथ व्याधिनिष्पत्तिक्रमः ]

**दोषाणां सञ्चयः कोपः प्रसरः स्थानसंश्रयः ।**
**व्याधिव्यक्तिरिति ज्ञेया परिणामपरम्परा ॥ ४५ ॥**

---

संग्रह । व्याधयस्ते तथात्वे तु लिङ्गान्येतानि नामयाः" इति । अस्य ह्ययमभिप्रायः—ज्ञानार्थं रोगलक्षणविशेषप्रतिपत्तये संग्रहे निदानस्थानादौ यानि तत्तद्रोगनिर्वाहक लक्षणान्युक्तानि, ते व्याधयस्तत्तल्लिङ्गसमष्टय एव व्याधयः । तथात्वे तत्तद्रोग-संज्ञानिर्वाहकत्वे च लिङ्गान्येवैतानि न त्वामयाः, तत्तल्लिङ्गबोधिताभ्यन्तर-विकृति-विशेषा इति । नन्वेवं लिङ्गानुमेयाश्चेदामयाः, भिन्ना एव ते लिङ्गेभ्यस्तर्हि स्वरूपतो रोगाणामज्ञाने नैतावता तृप्तिः सूक्ष्मदृशामिति चेत्, सत्यम् । तत्तल्लक्षण समष्टिबोधिताभ्यन्तरविकृतिपरम्परा एव परमार्थतो रोगा व्याधय गम्भीरदर्शिना सिद्धान्त. । तथापि वक्ष्यमाणसम्प्राप्तिबोधेन तद्बोधसम्भवात् नैदानिकानां लिङ्ग-समष्टिषु व्याधिपदव्यवहारो गौणोऽपि पर्याप्तप्रयोजनः—इति तत्त्वम् ।

ते चैते व्याधयो नानाविधविभागहेतुभिरनेकविधा उच्यन्ते । यथा अधिष्ठानभेदाद् द्विविधाः—शारीरा मानसाश्च । बाह्याभ्यन्तरहेतुभेदाद् वा द्विविधाः—आगन्तवो निजाश्च । बलप्रवृत्तिभेदात् सप्तविधाः, यथा सुश्रुते व्याधिसमुद्देशीये—"आदि बलप्रवृत्ताः जन्मबलप्रवृत्ताः, दोषबलप्रवृत्ताः, सङ्घातबलप्रवृत्ताः, काल बलप्रवृत्ताः, दैवबलप्रवृत्ता, स्वभावबलप्रवृत्ताश्चेति" ( सु० सूत्र० २४ अ० ) । चिकित्सा-सौकर्येण वा द्विविधाः साध्या असाध्याश्च । चतुर्विधा वा—सुखसाध्याः, कृच्छ्रसाध्याः, याप्याः, प्रत्याख्येयाश्चेति । तैरेतैर्विशेषणैर्विविधैर्विशेषिता व्याधयो बहुधाऽस्मिन् शास्त्रे श्रूयन्ते इति अविरोधेनोपन्यासः ॥ ४४ ॥

अथ व्याधिनिष्पत्तिर्दोषैः कथङ्कारं क्रियते इति तत्क्रमपरम्परां व्याचष्टे—**दोषाणामिति** । दोषाणां वातादीनाम् उपलक्षणेन आगन्तुविषाणाञ्च[1] शरीरप्रविष्टानाम्, सञ्चयादि व्याधिव्यक्ति पर्यन्ता परिणामपरम्परा ज्ञेया । तत्र सञ्चयः कोपश्चेति वृद्धेरेवावस्थाद्वयम् । ततः प्रसरः सर्वत्र शरीरे । ततो हृदय-यकृत् प्लीह फुफ्फुसादि-स्थानेषु एकस्य एकाधिकस्य वा दोषस्य संश्रयः सम्यगा-श्रयणम् । ततो व्याधेर्व्यक्तिः प्रकाशः स्वैर्लिङ्गैः । सेयं परिणामानामुत्तरोत्तर-विलक्षणावस्थाना परम्पराक्रमद्वारा सम्यग् विज्ञातव्येत्यक्षरार्थः ।

---

१ । यथा अलर्कविषादीनां क्रमेण सञ्चयाद्यवस्थाः, अन्ते च जलत्रासादि. ।

अत्रेदमवधेयम् । सञ्चयो नाम सम्यगुपचयः, अस्वाभाविकोपचय इति यावत् । कोपः किण्व-पिष्टसमवायोत्थसुरासन्धानवद्विकृतिपूर्वमुन्मार्गगमनम् । उभयमप्येतत् वृद्धेरेवान्तर्भूतम् । उक्तञ्च वाग्भटेन—"वृद्धिर्हि द्वेधा चय-प्रकोपभेदेन" ( अष्टाङ्ग-सं० सू० २१ अ० ) । पुनश्च द्विविधा—प्राकृत-वैकृतभेदेन । तत्र प्राकृती चतुर्विधा—वयोऽवस्थाकृता, दैनन्दिनी, भुक्तपरिणामजा, आर्त्तवी चेति । तत्र वयोऽवस्थाकृता यथा - बाल्ये प्रवर्द्धते श्लेष्मा, यौवने पित्तम्, वार्द्धक्ये वायुः । दैनन्दिनी यथा—पूर्वाह्णे कफः, मध्याह्ने पित्तम्, अपराह्णे वायु. । प्रदोषे कफः, मध्यरात्रे पित्तम्, रात्रिशेषे वायुरिति च । भुक्तपरिणामजा यथा- अन्नजरणास्यारम्भे कफः, मध्ये पित्तम्, शेषे वायु । आर्त्तवी यथा—वसन्ते कफः, शरदि पित्तम्, प्रावृषि वायुः । वचनञ्चात्र सर्वार्थसंग्रहकम्—"वायोऽहो-रात्रि-भुक्तानामन्तमध्यादिगाः क्रमात्" इति ( अष्टाङ्गहृ० सू० १ सु० ) । सुश्रुते तु स्पष्टतरमुक्तम् यथा—( वायुः ) "स शीताभ्रप्रवातेषु घर्मान्ते च विशेषत. । प्रत्यूपस्यपराह्णे च जीर्णेऽन्ने च प्रकुप्यति" । ( पित्तम् ) "तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः । मध्याह्ने चार्धरात्रे च जीर्य्यत्यन्ने च कुप्यति" ॥ ( कफः ) "स शीतैः शीतकाले च वसन्ते च विशेषतः । पूर्वाह्णे च प्रदोषे च भुक्तमात्रे च कुप्यति" ॥ ( सु० सू० २१ अ० ) इति । वैकृतौ चयकोपौ तु प्रायेणैतदतिरिक्तहेतुसम्भवौ पृथगेव, प्राकृतहेतुजैर्विकारैः सङ्कीर्णौ च बहुधा । न हि प्राकृत-वैकृत विकारा सर्वत्र सर्वथा पृथग् विवेक्तु शक्याः—इति सङ्क्षेपः ।

ननु यदुक्तं चय- प्रकोपौ वृद्धेरेव प्रकारौ इति, तत्र कथमनयोर्भेदप्रतिपत्ति. ? उच्यते । सञ्चितानां दोषाणां स्वस्थानेष्वेव स्वालक्षण्यबाहुल्यं निदान-प्रद्वेषादि च तत्र भेदकं स्यात्, कुपितानान्तु उन्मार्गगमनमपीति विशेषः । यथाह वाग्भटः—"चयो वृद्धिः स्वधाम्न्येव प्रद्वेपो वृद्धिहेतुषु । विपरीत-गुणेच्छा च, कोपस्तून्मार्ग-गामिता ।" इति ( अष्टाङ्गसं० सू० २० अ० ) । अथ कोपश्चेदुन्मार्गगामिता तर्हि प्रसरात् को भेदः । उच्यते । कोपे हि तल्लिङ्गानि स्वस्थानेषु, अन्यत्र च प्रायः प्रादुर्भवन्ति, नैव वा कोपाल्पत्वे । तदुक्तं—"कृत्स्नेऽर्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम् । दोषो विकार नभसि मेघवत् तत्र वर्षति । नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति । निष्प्रत्यनीकः[२] कालेन हेतुमासाद्य कुप्यति ।" इति ( सू० सू० २१ अ० ) । प्रसरे तु दोषा एकशो द्विशः समस्ता वा

१ । किण्व सुराबीज, पिष्ट तण्डुलादीनां तयो. सम्मेलनेन यत् कालकृत सन्धानमुत्सेचनक्रिया सुराजननी तद्वद् दोषदूष्यसम्मूर्च्छना । २ । निष्प्रतीकार ।

व्याधयोऽपरिसंख्येया भिद्यमाना भवन्ति हि।
रुजा-वर्ण-समुत्थान-स्थान-संस्थान-नामभिः ॥ ४६ ॥

---

नैकधा सर्वत्र प्रसरन्ति महानिवोदकसञ्चयः सेतुमवदार्य्य प्रधावित.। तेन तीव्रज्वर-मोहादीनि सर्वाङ्गगतानि लिङ्गानि प्रादुर्भवन्ति आ-स्थानसंश्रयात्। स्थानसंश्रये तु प्रायः शाम्यति प्रसरः, स्पष्टीभवन्ति च स्थानाश्रयलिङ्गानि. क्वचिदनुवर्त्तन्ते च सामान्यलिङ्गानि—इति तत्त्वम्। त एते पञ्च परिणामाः, पञ्च क्रियाकालाश्च तत्र तत्र क्रमश उपदिष्टाः पूर्वाचार्य्यैः। तद्विस्तरः सौश्रुत व्रणप्रश्नाध्याये द्रष्टव्यः।

ननु सञ्चयादिभेदज्ञानस्य सूक्ष्मबुद्धिवेद्यस्य किं फलम्। किञ्च, लिङ्गमात्रज्ञानेनैव प्रतीकारसम्भवे किमनेन विवेकेन ? —इति चेत्, शृणु। सञ्चयादिज्ञानेन प्रतीकार सौकर्य्यमनागतव्याधिप्रतिषेधश्चेति तत्प्रयोजनमाकलयन्ति सुभिषजः। तदुक्तम् सुश्रुते—“सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गती.। ते तूत्तरासु गतिषु भवन्ति बलवत्तरा.॥”—इति, “सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम्। व्यक्तिं भेदं च यो वेत्ति दोषाणा स भवेद् भिषक्॥” इति च।

अथ व्याधीनामसंख्येयत्व सहेतुक प्रतिपादयति चरकीयश्लोकेन—**व्याधय** इति (च० सू० १७ अ०)। व्याधयो रोगा अपरिसंख्येयाः, एतावन्त इति संख्यया व्यवच्छेत्तुमशक्या भवन्ति। हीति निश्चये। कथमेवमित्याह—रुजावर्णेत्यादि। रुजाः पीड़ाविशेषाः, वर्णा जातयः, रोगाणा भोग्यकालादिविचित्राचिन्त्यस्वभाव-दर्शनात्। समुत्थानानि निदानानि। स्थानानि आमाशय-पक्वाशय फुस्फुस हृद्यन्त्रादीनि रोगाधिष्ठानानि। संस्थानानि लक्षणानि। नामानि। संज्ञाविशेषाः। तैर्भिद्यमानाः सन्त.। नामेतिपदेन प्रत्येक सम्बन्धः न तु नामभेदादपि भेद इति व्याख्येयं, तादृशभेदकल्पनाया अयुक्तत्वात्। तथाहि रुजाभेदाद् व्याधिभेदो यथा अतीसारप्रवाहिकयोः। वर्णभेदाद् भेदो यथा तृतीयक-चतुर्थकज्वरयोः। समुत्थानभेदाद् भेदो यथा धुस्तूराहिफेन-जन्यविषलक्षणादीनाम्। स्थानभेदाद् भेदो यथा स एव वायुः सक्थिगतो गृध्रसीं, बाहुगतश्च विश्वचीं जनयति। तदेवं रोगाणामनन्तत्वे सिद्धेऽपि ज्ञाततमा केचिदवश्य ज्ञातव्याः। अतएवाह चरकोऽनुपदमेव—“व्यवस्थाकरणं तेषा यथास्थूलेषु सग्रहः” इति ॥ ४६ ॥

---

१। दृष्टान्तश्चात्र मसूरिकाया. स्मर्त्तव्या। २। क्रिया चिकित्सा।

दोषदूष्यगणेऽभिन्ने संमूर्च्छन-विशेषतः।
अदृष्ट-देश-कालादि-परिणामादनेकधाः ॥ ४७ ॥
पुराणाः प्रविलीयन्ते नवीनाः प्रादुरासते।
विभिद्यन्ते स्थिताश्चाथ नृणां नानाविधा गदाः ॥ ४८ ॥

---

अथैषां वक्ष्यमाणरोगाणां केषुचित् कालान्तर-परिणामादि-कारणविशेष-वशाद्विलुप्तप्रायेषु, अन्येषु रूपान्तरं प्राप्तेषु, अपरेषु च नवीनरूपैः प्रादुर्भूतेषु तत्तद्रोगविनिश्चयोपक्रमाऽसमर्थप्रायानुपलभ्य वैद्यविद्योपजीविन आर्षाभिप्रायं स्पष्टीकुर्वन्नाह—दोषदूष्येति। दोषा वातपित्तकफाः, दूष्याणि रसरक्तादीनि, तेषां गणः समूहः, तस्मिन्नभिन्ने सर्वत्र सर्वदा स्वरूपतस्तथाविध एव वर्त्तमानेऽपि। अदृष्टदेशकालादिपरिणामाद्धेतोः—अदृष्टस्य पूर्वस्मिन्नस्मिंश्च जन्मनि शुभाशुभकर्मफलरूपस्य, देशानां कालस्य चानेकधा परिणामात् नानाविध-विपर्य्ययात्। कालादीत्यादिपदेन नानाविधमिथ्याहारविहाराणामधुना प्रचलितानां ग्रहणम्, तानेव हीदानीं नियमेनोपयुञ्जते बहवः, ततोऽपि नवनवरोगविशेषसमुद्भव इति भावः। संमूर्च्छनविशेषतः—तथाविधविपर्य्ययजनित-दोषदूष्यसंघटनप्रकार-भेदात्। पुराणाः, प्रसिद्धाः प्राचां ग्रन्थोक्ताः। प्रविलीयते विलुप्ता भवन्ति, गदा रोगा इत्यन्वयः। नवीना अभिनवाश्च रोगाः प्रादुरासते प्रादुर्भूय तिष्ठन्ति। विभिद्यन्ते स्थिताश्चेति - त एव रोगाः भिन्नरूपाः सन्तो रोगान्तर-वत् प्रतीयन्ते। तत्र पुराणरोगाणां विलोपो यथा शूकदोष-केशसीमन्तकज्वरादीनाम् तथाहि सुश्रुते "व्याधयस्तत्र जायन्ते दश चाष्टौ च शूकजाः" इत्यादि. "असाध्यो बलवान् यस्तु केशसीमन्तकज्वरः" इति च। स्थितानां भिन्नरूपत्वं—यथा माधवीयनिदानोद्धृत-चरकोक्त समस्तिदोष-सन्निपातादेः। नहीदानीं प्रायः सन्निपात ज्वरे—"कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनं" भवति। नवानां प्रादुर्भावः, यथा फिरङ्गरोग ग्रन्थिकाऽऽक्षेपक-ज्वरादीनां वक्ष्यमाणानाम्। अत्र चार्थे प्राचां सम्मतिर्यथा चरके—"विकारनामाकुशलो जिह्रियान्न कदाचन। नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः"—इति। अस्य ह्ययमभिसन्धिः। अनन्ताः खलु रोगा अध्रुवस्थितयश्च, अमी च समुत्पन्नाः समुत्पद्यमानाः समुत्पत्स्यमानाश्च न तावत्सर्वे शक्या निर्द्देष्टुमियत्तया नामतः। ये पुनरिदानीं प्रसिद्धास्तेऽस्माभिर्निर्द्दिश्यन्ते नामलक्षणादिभिः, कालान्तरागामिनस्तु लक्षणादि-परिलक्षणेन सम्यग् वेदितव्याः। न चेदं लज्जापदं यदस्मदीयसंहितायामपि

प्रबन्धेषु ततः प्राचामुक्तानुक्ताकृतीन् गदान्।
आविष्कृततमान् ब्रूमः स्फुटलिङ्गान् समासतः॥ ४९॥

---

केषाञ्चिद्रोगाणां न लभ्येरन् लक्षणादीनीति। निरवधिर्हि कालो विपरिणामी नियतपरिवृत्तिशीलश्च जगत्, कथं न्वत्र नियमो ध्रुवसंस्थानलक्षणास्तथाविधा एव सदा वर्त्तेरन् रोगा इति। अन्यच्चाह सुश्रुतोऽपि—'अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्" इति (सु० सू० ३५ अ०)। अस्य ह्ययमभिप्रायः। बहव खल्वस्माभिरभिहिता रोगाः, सन्ति चेतरे समुत्पत्स्यमाना ये नेह शक्या विवरीतुम्। उपक्रमस्तु तेषां लक्षणदर्शनाद्दोषसंयोगविशेषानुमानतो दर्शितदिशा तत्तद्दोषप्रशमनाद्युपायविधानेन विधेय इति।

नन्वेवमास्तां नवीनरोगसंघो नाम, तथापि यदि सौश्रुतेङ्गितानुसारेण तत्तद्रोगारम्भकदोषानुमानपुरःसर दोषप्रशमनभेषजादिप्रदानेनैव तत्तद्रोगनिवृत्तिः, अलं तर्हि नवीनरोगलक्षणपरिज्ञानप्रयासेनेति चेत् उच्यते। त्रिविधो हि रोगाणामुपक्रमो भवति हेतुप्रत्यनीको व्याधिप्रत्यनीक उभयप्रत्यनीकश्चेति। तत्र स्वल्पबलदोषारब्धो हेतुप्रत्यनीकोपक्रमेण, मध्यबलदोषारब्धो व्याधिप्रत्यनीकोपक्रमेण, महाबलदोषारब्धस्तूभयप्रत्यनीकोपक्रमेण प्रशाम्यति रोगः, इति चिकित्सातत्त्वविदां सिद्धान्तः। वक्ष्यमाणनवीनरोगास्तु प्रायशो मध्यबलदोषारब्धा महाबलदोषारब्धा वा दुरुपक्रमाश्चेति व्याधिप्रत्यनीको हेतुव्याधिप्रत्यनीको वैषां भवितुमर्हत्युपक्रमः। तादृशोपक्रमश्च व्याधिविशेषनिश्चायकात्तच्चिकित्साविशेषोपदेशकादागमादृते न शक्यः कर्त्तुम्। सौश्रुतोपदेशस्तु स्वल्पबलनवीनरोगेष्वेव चरितार्थो नाधिकबलनवीनरोगेष्वित्यमोघ एवायमभिनवरोगलक्षणपरिज्ञानप्रयास.। किञ्च, अनभ्यस्तनवीनरोगलक्षणविशेषो भिषङ् नवीनरोगेषु परिज्ञात-रोगलक्षणसादृश्यदर्शनात् संशयानो नैव वा शक्नुयाद्रुजां प्रतिकर्त्तुं, हन्याद्वाऽऽतुरमञ्जसोपक्रमणेन। न चायमलं पूर्वत एव प्रतिविधातुं वक्ष्यमाणश्वसनकसन्निपातस्य पञ्चमे सप्तमे वा दिवसे भविष्यन्तीमकस्माज्ज्वरनिर्मुक्तिं बहुधा प्राणान्तकरीम्, आन्त्रिकाख्ये सन्निपाते च द्वितीये तृतीये वा सप्ताहे जनिष्यमाणं रक्तस्रावञ्च प्राणान्तकम्। तस्मादितोऽपि पुष्कलफलो नवीनरोगलक्षणाभ्यासप्रयासः॥ अतएवाहुः—'तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च। समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत्॥" इति (च० सू० १८ अ०)॥४६।४८॥

अथन त्रैकालिकनिखिलरोगाणामानन्त्यं विशदीकृत्य विवक्षितं प्रतिजानीते—[प्र]बन्धेष्विति। ततः, यत एवं तस्माद्धेतोः। प्राचां पूर्वाचार्याणां प्रबन्धेषु

निजाश्चागन्तुकाश्चेति सामान्याद् व्याधयो द्विधा ।
तेष्वेके कर्म्मजा अन्ये कुलजाश्चेति निश्चयः ॥ ५० ॥

ग्रन्थेषु उक्ताकृतीननुक्ताकृतींश्च, स्पष्टोक्तस्वरूपानस्पष्टोक्तस्वरूपाननभिहितस्वरूपांश्चेति फलितार्थः । स्फुटलिङ्गान् परिव्यक्तलक्षणत्वेन सुप्रसिद्धान् महान रोगान् समासतः सङ्क्षेपतो ब्रूमो वर्णयामः । नन्वपरिसङ्ख्येया रोगा इति स्वयं प्रतिपाद्य कथमधुना त एव परिसंख्याय वर्णनीयास्त्वयेत्याशंक्य विशेषणमाह- आविष्कृततमानिति । आविष्कृततमाः सम्यक् स्वरूपादिपरिज्ञानेन य इदानीं परिज्ञाततमास्तानेव ब्रूमो न तु सर्वान्, सर्वेषां स्वरूपवचनस्याशक्यत्वात् । इयञ्चापि शैली यदाविष्कृततमवचनं नाम । तथाहि चरकः - "अशीतिर्वातजा विकाराः" इत्युपक्रम्य उपसंहरति "इमे ह्याविष्कृततमाः" इत्यादि । ( च० सू० ११ अ० ) । एवञ्च कालान्तरागामिनोऽपि रोगाः स्फुटलक्षणा अवश्य वेदितव्या वर्णयितव्याश्चेति सूच्यते ॥ ४९ ॥

अथ रोगाणामसंख्येयत्वेऽपि सामान्यतो द्वेधा विभाग, तत्र च वैशिष्ट्यं दर्शयन्नध्यायमुपसंहरति—निजाश्च इति । निजा मिथ्याहारविहारादिहेतुकाः । आगन्तुका आगन्तुहेतुकाश्च वक्ष्यमाणाः । इति सामान्याद् व्याधयो द्विधा भिद्यन्ते वक्तमानेष्वपि पूर्वोक्ताऽवन्तरभेदेषु । तेषु विशेषमाह—तेष्विति । तेषु चेत्थं भिद्यमानेषु रोगेषु मध्ये एके कर्म्मजाः पूर्वस्मिन्नस्मिंश्च जन्मनि कृतानां कृष्णकर्म्मणां विपाकसमुत्थाः । अन्ये केऽपि कुलजाः पितृमातृकुलाभ्यामागताः यथा श्वासोन्मादाऽपस्मार-फिरङ्गरोगाद्याः । इति निश्चयः प्राचामिति[1] शेषः । ननु कुलजा अपि कर्म्मजाः, तत्तद्रोगिकुलेषु जन्मनोऽपि प्राक्तनकर्म्मफलभूतत्वादिति चेत् । एवमस्तु । लोके पृथग् व्यवहारदर्शनात् पृथगुक्तिः । अथ कथं ज्ञायते कर्म्मजा इमे रोगाः - इति ? उच्यते । समीचीनोपक्रमेऽपि फलाऽदर्शनादाकलयामः कर्म्मजान् रोगान्, तपोदानादिभिरुपशमदर्शनाच्च । तदुक्तं—'क्रियाघ्ना' कर्म्मजा रोगाः प्रशमं यान्ति तत्क्षयात्" इति ।

इति महामहोपाध्याय श्रीगणनाथसेन-शर्म-विद्यासागर-सरस्वती विरचिते

## सिद्धान्तनिदाने

दोषदूष्यादिनिर्णयाख्यः प्रथमोऽध्यायः ।

---

१ । आधुनिकानान्तु मते न सन्ति प्राक्तन कर्मजाः रोगा नापि पापजाः । रोगोत्पादकलौकिककर्म्मजास्तु सन्त्येव । तदेतत् नास्तिकमत नाश्रयणीयम् ।

## अथ द्वितीयोऽध्यायः।

[ व्याधिविज्ञानम् ]

**निदानं पूर्वरूपञ्च रूपञ्चोपशयस्तथा।**
**सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥ १॥**

---

इह खलु रुजन्ति शरीरं मनश्चेति शरीरमनसोरावाधकरा विशिष्टलक्षणसमष्टिभूताः, तद्बोधितास्यन्तर्विकृतिविशेषरूपा वा भावा रोगाः, रोगविनिश्चयश्च रोगाणां विशेषेण निश्चितं ज्ञानम्, तत्पञ्चभिनिदानादिभिः सुविज्ञातैः सम्पद्यते इति प्रथमतस्तान्याह—निदानमिति। रुजं रोगाणां विज्ञानं विशेषज्ञानं स्वरूपावधारणं पञ्चधा पञ्चप्रकारकं विदितं प्रसिद्धम्। पञ्चभिर्भावैः सम्पद्यते, पञ्चविधज्ञानसमष्टिभूतमिति फलितार्थः। ते च पञ्च भावाः, निदानं पूर्वरूपं रूपमुपशयः सम्प्राप्तिश्चेति। अत्र विज्ञानमिति विशिष्टं ज्ञानम्। भावे ल्युट् न करणे। न हि निदानादयो ज्ञानकरणानि किन्तु ज्ञानविषयाः, निदानादिभिरेव हि सुपरिज्ञातैर्विज्ञातोऽयं रोग इति व्यपदेशात् तज्ज्ञानव्यतिरिक्तस्य रोगविज्ञानस्य चाप्रसिद्धत्वात्। अतएव चरकः ‘तस्माद्व्याधिन् भिषगनुपहतसत्त्वबद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत” इति। अत्र भावैरिति स्पष्टमाह परमर्षिर्न तूपायैरिति मतिमद्भिरवधेयम्।

यत्तु माधवीयनिदानव्याख्यायां विजयरक्षितः—“व्याधेर्ज्ञातव्यस्य पञ्चधा ज्ञानोपाया भवन्ती” त्युपक्रम्य “व्याधिनिश्चयकरणं निदानमिति निदानपञ्चकसामान्यलक्षण” मित्याह तच्चिन्त्यम्। आर्षमतविरोधाद्युक्तिविरोधाच्च। तत्रार्षमतविरोधो यथा,—सुश्रुते“षड्विधो हि रोगाणां विज्ञानोपायः, तद्यथा पञ्चभिः श्रोत्रादिभिः प्रश्नेन च”—इत्याचक्षाणो धन्वन्तरिः षड्विधमेव रोगविज्ञानकरणमन्यदेव निदानादिपंचकादुपदिदेश। एवं चरकेऽपि भगवानात्रेयः “त्रिविधं खलु रोगविशेषविज्ञान”मित्यारभ्य “प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्समानः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्थानातुरगतान् परीक्षेतान्यत्र रसज्ञानात्” इत्यादिना तथैवानुशास्ति स्म। स्फुटश्चैवमार्षाभिप्रायो यथा एतान्येव ज्ञानकरणानि, विज्ञानविषयास्तु निदानादयो न विज्ञानकरणानीति। अथ निदानादीनां करणत्वस्वीकारे युक्तिविरोधोऽपि स्पष्ट एव। व्यापारवद्धि कारणं करणमुच्यते, व्यापारश्च निदानादीनां न कश्चन शक्यः सम्यक् प्रतिपादयितुम्। अथ लिङ्गज्ञानेन

[ अथ निदानम् ]

**बाह्यं निमित्तं रोगाणां निदानमिति कीर्त्तितम् ।**
**विधाय धातुवैषम्यं साक्षाद् वा रोगकारि तत् ॥ २ ॥**

लिङ्गज्ञानमिति निदानादीनि लिङ्गिनी व्याधेराभ्यन्तरविकृतिरूपस्य बोधकानि, तथा च करणानि सन्त्विति चेत्, मैवम् । न हि निदानादीनां क्वचिद् व्याधिबोधकत्वेऽपि करणत्वं सुसाधम् । न खलु वह्नेर्लिङ्गं धूमो वह्निज्ञानं प्रति करणम् यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिज्ञानन्तु करणम् । तथा चाहुस्तार्किकाः— "व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् । अनुमाया ज्ञायमानं लिङ्गन्तु करणं न हि" इति । न च निदानादीनां सर्वेषां लिङ्गत्वमपि, निदानादिपञ्चकान्तर्भूतायाः सम्प्राप्तेर्व्याधिलिङ्गत्वाभावात् । व्याधिस्वरूपं हि सम्प्राप्तिर्बोध्या नतु बोधिका । तथाहि चरकः—"सम्प्राप्तिर्जातिरागतिरित्यनर्थान्तरं व्याधेः" इति । एवञ्च "एते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः, न च समस्तपक्षे कुनकरणत्वं वाच्यम्" इत्याद्यपि रक्षितोक्तं परास्तम् । न खलु करिणः शुण्ड-कर्ण-चरणादिभिरवयवैर्व्यस्तैः समस्तैश्च परिज्ञातैः सम्यक् करिपरिज्ञानं भवति, किं तर्हि, समस्तैरेव । व्यस्तैः खल्ववयवैः परिज्ञातैरवयविपरिज्ञानं पुनरन्धेन नीयमानानामन्धानामेव श्रेयसे न चक्षुष्मतामित्यलं बहुप्रसङ्गेन ॥ १ ॥

अथ निदानादीनां मध्ये प्रथमं निदानपदार्थं व्याचष्टे—**बाह्यमिति** । रोगाणां बाह्यं न त्वाभ्यन्तरं कारणं मिथ्याहारविहाराभिघातादि निदानमिति कीर्त्तितं परिभाषितं परमर्षिभिः पूर्वैः । निमित्तपदं समवायिकारणानां दोषदूष्याणामसमवायिकारणस्य तत्संयोगस्य च वारणार्थम् । तच्च निदानं द्विविधं सम्भवतीति दर्शयन्नाह—**विधायेति** । धातूनां वातपित्तकफानां रसरक्तादीनाञ्च वैषम्यं स्वाभाविकपरिमाणविपर्ययं विधाय कृत्वा धातुवैषम्यद्वारेणेत्यर्थः । अथवा साक्षात् प्रथमतो धातुवैषम्यमकृत्वैव सद्यो रोगकारि, रोगाणां शारीरमानसानां व्याधिनां करणशीलं तत् सम्पद्यते । ते च रोगाः क्रमेण धातुवैषम्यसम्भूता निजा इति, आगन्तुहेतुजास्त्वागन्तुजा इत्यागन्तव इति वा व्यपदिश्यन्ते । उक्तञ्च—"द्विविधा प्रकृतिरेषामागन्तु-निजविभागात् । मुखानि ते खल्वागन्तोर्नखदशनपतनाभिघाताभिचाराभिशाप-वध-बन्धन-व्यधन-वेष्टन-पीडन-रज्जु-दहन-शस्त्राशनि-भूतोपसर्गादीनि । निजस्य तु खलु मुखं वातपित्तश्लैष्मिकं वैषम्यम् ।" इति (च० सू० २० अ० ) ।

१ । प्रकृतिः स्वभावः । प्रत्यासन्नं कारणमिति चक्रः । २ । मुखानि कारणानि ।

तथाच धातुवैषम्यद्वारेण रोगोत्पादनशील सामान्यं निदानं, साक्षाद्रोगोत्पादनक्षमं विशिष्टं निदानमिति फलितोऽर्थः। दोषजत्वसामान्येऽपि विशेषमेतत्कार्ययोराह चरकः "आगन्तुर्हि व्यथापूर्वमुत्पन्नो जघन्य[1] वातपित्तश्लेष्मणा वैषम्यमापादयति। निजे तु वातपित्तश्लेष्माणः पूर्वं वैषम्यमापाद्यन्ते जघन्यं व्यथामभिनिर्वर्त्तयन्ति"इति। ( च० सू० २० अ० )।

एतच्चाखिलमपि निदानं सूक्ष्मदृशा त्रिविधमप्याचक्षते ऋषयः। तद्यथा—"द्वयोस्तु खल्वागन्तुनिजयोः प्रेरणम्[2]—असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति"। ( च० सू० २० अ० )। तत्र इन्द्रियार्थानां शब्द स्पर्श-रूप-रस-गन्धानामयोगाऽतियोग-मिथ्यायोगा—असात्म्येन्द्रियार्थसंयोगः। वाङ्मनःशरीर-प्रवृत्तीनामयोगाऽतियोग मिथ्यायोगाः—प्रज्ञापराधः। शीतोष्ण-वर्ष-लक्षणस्य कालस्याऽयोगातियोगमिथ्यायोगाः—परिणामः। अभिघातादीनामधर्मस्य च प्रज्ञापराध एवाऽन्तर्भावः। अत्र निखिलार्थसंग्राहकं निदानसूत्रमपि चरके यथा—"कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च। द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः॥" इति ( च० सू० १ अ० )।

एवञ्च निदानपदाभिधेयं हेतुजातं बाह्यमेवेति संशयच्छेदि वचः पर्य्यवस्यति परमर्षीणाम्। तथाच 'आभ्यन्तरं तु निदानं दोषा दूष्याश्चेति"—कस्यचिद् वचनमसमञ्जसमेव। निमित्तं हि निदानमुच्यते कुलालादिवत् घटादेः। दोषा दूष्याश्च विक्रियमाणाः समवायिकारणं न निमित्तम्, ततश्च न निदानपदाभिधेयतामर्हन्तीत्यवोचाम। स्पष्टं चाहुरन्यत्र - "इह खलु निदान-दोष दूष्यविशेषेभ्यो विकाराणां विघात-भावाऽभावप्रतिविशेषा भवन्तीति" ( च० नि० ४ अ० )। यदि दोषा दूष्याश्च निदानमेव स्युस्तर्हि कथं नामेह ते पृथङ् निर्दिश्येरन्? तस्मान्निदानं बाह्यमेव नाभ्यन्तरमिति सुदृढः सिद्धान्तः। वङ्गसेनसंग्रहेऽप्युक्तं - "येनाहार-विहारेण रोगाणामुद्भवो भवेत्। क्षयो वृद्धिश्च दोषाणां निदानं हि तदुच्यते।" इति। अत्रापि दोषनिदानयोः पार्थक्यं स्पष्टम्। इमञ्चार्षमतसिद्धान्तं भास्करोदयाख्ये रोगविज्ञाने स्पष्टमाह श्रीगङ्गाधरोऽपि—"त्रिविधान्येतानि विकारस्य धातुवैषम्यस्य बाह्यानि कारणानि, न च सन्त्याभ्यन्तराणि कारणानीत्यादि।" एवञ्च "सर्वेषामेव रोगाणां निदानं कुपिता मला"इति वाग्भटीयवचने निदानपदप्रयोगो हेतुमात्रपर इत्यवसेयम्। ननु कथं तर्हि सुश्रुतः "सर्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूल" मिति ( सु० सू० २४ अ० )? उच्यते। सर्वेषां खलु व्याधीनां

१। जघन्य पश्चात्। २। प्रेरणं प्रयोजकं कारणं निमित्तमित्यर्थः।

मिथ्याहारविहारादि सामान्यं समुदाहृतम् ।
विशिष्टं विषशस्त्राग्निक्रिमिठ्यालादि कीर्त्तितम् ॥ ३ ॥

---

समवायिकारणानि वातादीनि, मृदादिवत् घटादेरित्यभिप्रायः । न हि तत्र निदानपदं प्रायुङ्क्त शास्त्रकारः । आह च तत्रैव— 'यथाहि कृत्स्नं विकारजातं विश्वरूपेणावस्थित सत्त्वरजस्तमासि न व्यतिरिच्यन्ते एवमेवे" त्यादि ।

यत्तु "नानामुनीनां वचनैः" ग्रन्थनिर्माण प्रतिज्ञाय सत्सु पूर्वोक्तचरकादिकृत निर्दोषलक्षणेष्वादावेव 'निमित्तहेत्वायतने' त्यारभ्य "इति प्रोक्तो निदानार्थस्तद्व्यासेनोपदेक्ष्यते" इत्यन्तमनार्षसन्दर्भमुद्धार माधवकरः, तत्रादौ 'निमित्तहेत्वायतने" त्यादि निदानलक्षणं तावद् विचार्य्यते । पर्य्यायकथनं ह्येतन्न लक्षण भवितुमर्हति । नहीन्द्रस्य स्वरूपे वक्तव्ये "इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः" इति पर्य्याप्त लक्षणं भवति । यच्चेदं व्याचक्षाणो विजयः— 'तस्मान्निदानादिभि. पर्य्यायैरभिधीयमानत्वं निदानत्व" मिति, तदाग्रहमूलमेव । न खल्वेतादृशं लक्षणं क्वचिद् दृष्टं श्रुतं वा, नाप्येतेन स्वरूपप्रतिपत्तिः । यच्च तेन "सेतिकर्त्तव्यताको रोगोत्पादको हेतुर्निदानम्" इति स्वयं लक्षणं सूचयता प्रथममेव "सन्निकृष्ट-विप्रकृष्ट व्यभिचारि प्राधानिकभेदाच्चतुर्थे"ति हरिचन्द्रकृतं निदानभेदचतुष्टयमुपन्यस्तं, तदपि चिन्त्यम् । तथाहि "व्यभिचारी हेतुर्नाम यो दुर्बलत्वाद् व्याधिकरणासमर्थः" इत्युक्तं, तथा चेन्नासौ रोगोत्पादकस्तर्हि भवत्कृतेन लक्षणेन न व्याप्य इत्यव्याप्तिर्नाम लक्षणदोषः । अस्मन्मते तु रोगोत्पादनशीलं बाह्य निमित्तं निदानमित्युक्तेः नैष दोषः । अथ 'बाह्याभ्यन्तरभेदाच्च द्विधे"ति यदुक्तं तेनैव, तत् सर्वथा प्रामादिकमिति सप्रमाणमवोचाम । एवञ्च दोषदूष्याणा भेदप्रपञ्चकथनं रक्षितकृतं निदानार्थव्याख्यायामनुपयोगीत्यलमकाण्डे भेद विस्तरख्यापनेन ॥ २ ॥

अथ पूर्वोक्त द्विविध निदान दृष्टान्तप्रदर्शनेन स्फुटीकरोति— **मिथ्याहारेति** । सामान्य सामान्याख्यं निदानं निजरोगनिमित्त मिथ्याहारविहारादि, आहाराचारादिव्यतिक्रमरूपं, समुदाहृत सम्यग् उदाहरणैः प्रदर्शित चरकादिग्रन्थेषु । विस्तरश्चात्र प्राचीन पद्येषु यथा— "व्यायामादपतर्पणात् प्रपतनाद्भङ्गात् क्षयाज्जागराद्, वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्ष क्षोभ-कषाय-तिक्तकटुकैरेभिः प्रकोपं व्रजेद् वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च ॥ कट्वम्लोष्ण-विदाहितीक्ष्ण लवण क्रोधोपवासातप-स्त्रीसंपर्क-तिलातसी-दधि-सुरा-सूक्तारनालादिभि । भुक्ते जीर्य्यति भोजने च शरदि ग्रीष्मे सति प्राणिना मध्याह्ने च तथार्द्धरात्रसमये पित्तं

प्रकोपं प्रजेत् ॥ गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्य द्रवदधि दिननिद्रापूपसर्पिःप्रपूरः तुहिनपतनकाले श्लेष्मणः सप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते ॥"-- इति। तदिदं सामान्यं निदानं धातुवैषम्यं जनयद्रोगं निर्वर्तयतीत्युक्तपूर्वम्। अथ विशिष्टं विशिष्टाख्यं तु निदानमागन्तुरोगनिमित्तं साक्षाद्रोगकारि विषशस्त्राग्निक्रिमिव्यालादि-कीर्त्तितं प्रसिद्धम्। तत्र विषपानशस्त्रप्रहाराग्निदाहा., स्थूलाः क्रिमयो, व्यालाना सर्पादीना दंशनादि चेति स्थूलतमानि विशिष्टनिदानानि। जीवाण्वपरपर्य्यायाः कुष्ठादिकर्माणः सूक्ष्माः क्रिमयस्तु--सूक्ष्मतमं विशिष्ट निदानमिति विशेषः। अभिघातादिस्थूलकारणमारभ्य जीवाणुपर्य्यन्त सूक्ष्म वै यत् किञ्चित् बाह्यकारणं तदेव विशिष्टं निदानमिति फलितार्थः।

अथात्र केचिद्विप्रतिपद्येरन्—ननु कोऽयमश्रुतचरो जीवाणुकारणवादो नाम? नहि जीवाणवो रोगकारणानीति क्वापि ऋषिभिरनुमतं पश्यामः, उपलभ्यमानाश्च जीवाणवः कार्य्याण्येव दोषदूष्यविकारजानि स्युर्न कारणानीति न वयं प्रतिपद्यामहे पाश्चात्यमत जीवाणवः क्वापि रोगकारणमिति। तान् प्रति ब्रूमः। न खलु कल्पनामात्रमिदं केषाञ्चिद् यदेष जीवाणुकारणवादो नाम, प्रत्यक्षप्रमाणोपलब्धे-स्तदन्वयव्यतिरेकानुविधायित्वाद्रोगाणामार्षसम्मतिदर्शनाच्च। तत्र प्रत्यक्षप्रमाणो-पलब्धिर्यथा संक्रामकरोगेषु कुष्ठयक्ष्मादिषु प्रत्यक्ष दृश्यन्ते सूक्ष्मा जीवाणव शोणितश्लेष्मादिगताश्चक्षुषाऽणुवीक्षणादियन्त्रसहायेन। पृथग्विधाश्चैते प्रति-संक्रामकरोगम्। इदञ्चेदञ्च नः प्रत्यक्षं यत्तैस्तैर्जीवाणुभिः प्राण्यन्तरेषु परीक्षार्थं सङ्क्रामितैरुत्पाद्यन्ते ते ते रोगाः। तदन्वयव्यतिरेकानुविधायित्वं च रोगाणां यथा—यत्र यत्र ते ते सङ्क्रामिणो रोगास्तत्र तत्र ते ते जीवाणवः। यत्र यत्र न ते जीवाणवस्तत्र तत्र न ते रोगा इति। तथा च प्रतिपाद्यते कार्य्यकारणभावः। आर्षसम्मतिश्चात्रार्थे भूयसी दृश्यते—तथाहि कुष्ठाधिकारे सुश्रुत.—"सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि भवन्त्युपसंग्रहतस्तु दोषग्रहणमभिभवात्" इति (सु० नि० ५ अ०)। नच वाच्यं सहचारित्वमेवेह क्रिमीणामुपदिष्टं न कारणत्वमिति। यतश्चरकार्थमनुवदन् वाग्भटोऽप्याह—"रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः। अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः। केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः। षट् ते कुष्ठैक-कर्माणः सहसौरसमातरः" इति। इह कुष्ठैककर्माण इत्युक्ते स्पष्टमेव जीवाणूनां कारणत्वम्। एवं सुश्रुतोऽपि "रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते" (सु० उ० ५४ अ०) इति रक्तजक्रिमीणां प्रायेण रक्ताधिष्ठानजरोग-

(अथ पूर्वरूपम्)

पूर्वरूपं भवेल्लिङ्गं भाविव्याधिप्रबोधकम्।
सामान्यञ्च विशिष्टञ्च द्विधा तदपि कीर्त्तितम्॥ ४॥

कारणत्वं प्रतिपेदे, दर्शयामास च तास्तान् रोगान् कुष्ठ-वीसर्प पिड़का-मशक-नीलिका तिलकालक-न्यच्छ-व्यङ्गेन्द्रलुप्त प्लीह-विद्रधि गुल्म वातशोणितादीन् (सु० सू० २४ अ०)। इदञ्च जीवाणुकारणवादस्य वीजं दर्शयतः सुश्रुताचार्य्यस्य संग्रह-वचनम्—'प्रसङ्गाद् गात्रसंस्पर्शान्निःश्वासात्सहभोजनात्। सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्। कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च। औपसर्गिक-रोगाश्च संक्रामन्ति नरान्नरम्" इति (सु० नि० ५ अ०)। अत्र ज्वर इति न सर्वविधो ज्वरः, किन्तु ग्रन्थिकसन्निपातादिरेवेति व्याख्येयम्। शोषो राजयक्ष्मा। औप-सर्गिकरोगा मसूरिकादयः। तदेवं सुश्रुतेन संक्रामकरोगाणां संक्रमणकारणसूत्रणेन सम्यग् दिग् दर्शिता। "केशादाद्यास्त्वदृश्यास्ते" (सु० उत्तर० ५४ अ०)इति वचनेन अदृश्यत्वञ्च सूचितम्। नाश्चाधुना अदृश्यानपि जीवाणूनणुवीक्षणयन्त्रादिसहायेन चक्षुषा पश्यामोऽपि। तस्मादार्षमताऽविरुद्ध एवायं जीवाणुकारणवादः पाश्चात्यैः सम्यक् विस्तारितः परीक्षया ग्रहणीय एव। ननु तर्हि परमर्षिभिरेव सर्वज्ञैः कथं न सम्यग् गृहीत इति चेत्, उच्यते। सत्स्वपि व्याधिवीजभूतेषु जीवाणुषु तदुपयोगि क्षेत्रमपेक्षितं, तच्च अब्रह्मचर्य्यादिक्षामं शरीरमेव। न हि सम्यग् यमनियमादिवतामप्रतिहतशक्तीनां किञ्चित्करा रोगजीवाणवः। अतएव पूर्वाचार्यै-र्यम-नियम-दिनचर्य्यार्तुचर्य्यादिभिः क्षेत्रसंरक्षणाय बहुधा शास्त्रविधिर्व्यधायि। इदानीन्तु तादृश-यमनियमाद्यशक्तानां प्रायशो मिथ्याहारविहारादिभिः समुपरक्षेत्र-भूतेषु शरीरेषु प्रकामप्रसरो जीवाणुप्रभाव इत्यस्ति साम्प्रतं जीवाणुतत्त्वपरिज्ञानस्य सार्थकता। प्रयोजनं चास्य जीवाणुकारणवादस्य जीवाणूनां संक्रमणप्रतिषेधो निदानपरिवर्ज्जनं चिकित्साविशेषश्चेत्युपरिष्टाद् दर्शयिष्यामो यथास्थानम्॥ ३[1]

निदानमभिधाय पूर्वरूपमाचष्टे चरकार्थानुवादेन—**पूर्वरूपमिति**। भाविनः उत्पत्स्यमानस्य न तूत्पन्नस्य व्याधेः प्रबोधकं सूचकं लिङ्गं लक्षणं पूर्वरूपं भवेत्। तदुक्तं "पूर्वरूपं नाम प्रागुत्पत्तिलक्षणं व्याधेः" (च० नि० १म अ०) व्याख्यातञ्चेदं चक्रपाणिना—'उत्पत्तेः प्राक् प्रागुत्पत्ति, एतेन उत्पत्तेः पूर्वं यद्

१। संक्रमणकारणञ्चात्र क्वचिद् वायुवाहितं, क्वचित् स्पर्शवाहितं, क्वचिदन्नवाहितं वस्तु—इति सुश्रुतोक्त्या स्पष्टम्।

सामान्यं दोषकोपस्य विशेषं नावबोधयेत्।
विशेषं बोधयेद् यत्तद् विशिष्टं पूर्वलक्षणम्॥ ५॥

---

भविष्यद्व्याधेर्लक्षणं तत् पूर्वरूपमित्यर्थः—इति। तेन दोषजमदोषजं च यत् किञ्चिल्लिङ्गं व्याधिजन्मनः प्राग् दृश्यते तदेव पूर्वरूपम्। तत्र दृष्टान्तो यथा—"स्त्रीमांसमद्यप्रियता प्रियता चावगुण्ठने।" (च० चि० ८ अ०) इति, "मक्षिका घुणकेशानां तृणानां पतनानि च। प्रायोऽन्नपाने"—इति च अनयोश्चाद्यं दोषजं द्वितीयमदोषजमाहुः। वस्तुतस्तु धातुवैषम्ये जाते स्थानविशेषाधिष्ठितैर्दोषैर्यद् यल्लिङ्गं पुरुषे जन्यते स्वमात्रपरिज्ञेयमन्यैरपि परिज्ञेयं वा प्राक् तदेव पूर्वरूपमिति गृह्यते। तत्र स्वमात्रपरिज्ञेयं लिङ्गं यथा दुःस्वप्नदर्शनादि। अन्यपरिज्ञेयं लिङ्गं यथा कास-ज्वरादि। आहुश्च—"स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम्। दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते"—इति॥ ननु स्थानसंश्रयिभिः क्रुद्धैर्हि दोषैर्जायमान एव व्याधिर्जायते न तु जनिष्यमाण इति हेतोर्विप्रतिपिद्धमिदमुच्यते—स्थानसंश्रयिणः क्रुद्धाश्च दोषाः, कुर्वन्ति च भाविव्याधिप्रबोधकं लिङ्गमिति चेत्। मैवम्। नह्यत्र दुःखसंयोगमात्ररूपो व्याधिरभिप्रेतः, किन्तु लक्षणसमुदायात्मको ज्वरादिर्निर्दिष्टसंज्ञकः। स च नाद्यापि सर्वथा जातः। जनिष्यमाणस्य च तस्यैतल्लिङ्गं पूर्वरूपं नाम, धातुवैषम्यकृतञ्चैतत्, एवञ्च यदाऽऽगन्तुरोगेषु न प्राग् धातुवैषम्यं तदा न पूर्वरूपमित्यवसेयम्।

तच्च पूर्वरूपमवस्थापारम्पर्याद् द्विविधमित्याह—**सामान्यञ्चेति**। तत् पूर्वोक्तं पूर्वरूपमपि। अपि शब्दान्निदानवदिति भावः। सामान्यञ्च विशिष्टञ्चेति द्विधा द्विप्रकारं कीर्त्तितमुक्तम्। तत्र सामान्यं पूर्वरूपं भाविव्याधिबोधकमपि दोषकोपस्य विशेषं, कतमो दोषः किंस्थानाश्रयः कुपित इत्येवमादिकं, नावबोधयेन्न ज्ञापयेत्। यत्तु विशेषमीदृशं बोधयेत्तद्विशिष्टं पूर्वरूपम्। तेन धातुवैषम्यं जातं ज्वरश्च भविष्यतीति सामान्यज्ञानं सामान्यपूर्वरूपेण, स चासौ ज्वरो वातादिदोषविशेषकृतः स्यादिति विशिष्टज्ञानं विशिष्टपूर्वरूपेण भवतीति फलितार्थः। तच्चैतद् द्विविधं पूर्वरूपं कुद्धानां दोषाणां स्थानसंश्रयाद्यवस्थानुसारात् प्रायः पौर्वापर्येण लक्ष्यते। तद्यथा सुश्रुते—"श्रमोऽरतिर्विवर्णत्व"मित्यादि ज्वरस्य सामान्यं पूर्वरूपमभिधाय पुनरुच्यते—'जृम्भात्यर्थं समीरणात्। पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत्"—इत्यादि विशिष्टं पूर्वरूपम्। द्विविधस्य चास्य बलीयस्त्वाद् बलीयस्त्वमसाध्यत्वं वा रोगस्यानुमीयते, निविड़मेघाडम्बरदर्शनाद् भूरिवृष्टिवत्

[ अथ रूपम् ]

**उत्पन्नव्याधिलिङ्गानि रूपमाहुर्मनीषिणः।**
**प्रधानं व्याधिबोधाय ज्ञाननिश्चयदं हि तत् ॥ ६ ॥**

---

उक्तञ्च—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः। अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्।" इति ( च० इन्द्रिय० ५ अ० )।

यत्तु वाग्भटवचनमालोद्धारी माधवः—'प्राग्रूपं येन लक्ष्यते। उत्पित्सुरामयो दोषविशेषेणाऽनधिष्ठितः। लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद् यथायथम्" इति—तन्नातिसङ्गतम्, युक्तिविरोधात्। दोषविशेषेणाऽनधिष्ठितश्चेत् नैवोत्पद्येत रोगः, उत्पद्येत वा आगन्तुरेव, नचागन्तोरस्ति पूर्वरूपम्। न चारुणदत्तव्याख्यानुसारतो "व्यक्तमनधिष्ठित इत्यनुक्तमपि गम्यमानत्वादुक्तं बोध्यम्"इत्यपि सङ्गच्छते। नहीदं कथमपि गम्यमानं प्रत्युत न्यूनमेव। अथ नञ ईषदर्थे प्रयोग इति चेत्, तर्हि ईषद्दोषकृतानामेव रोगाणां बुभूषूणां पूर्वरूपमनेन लक्ष्येत, न बहुदोषकृतानामित्यव्याप्तिः न च दोषविशेषेणेत्यस्य "वातादिजन्याऽसाधारणवेपथ्वादिने"ति व्याख्यानं रक्षितोक्तं शक्यं कथमपि रक्षितुं प्रेक्षावद्भिः, सर्वथाऽश्रुतचरत्वादीदृशार्थस्य। न हि दोषपदं क्वचिदपि लिङ्गवाचि दृष्टं श्रुतं वा। न च तेनोक्तम् "विशिष्टप्राग्रूपमाह– लिङ्गमव्यक्त"मित्यादि व्याख्यानं कथमपि युक्तियुक्तं प्रतीमः। पूर्वोत्तरार्थविरोधादीदृशकल्पनाया अन्याय्यत्वाच्च। प्राग्रूपसाधारणं खल्विदं लक्षणं वाग्भटेनोपनिबद्धं व्याख्यातञ्च तथैवारुणदत्तेनापि। न चात्रास्ति लिङ्गमव्यक्तम्"— इत्यादौ किञ्चिदप्यसाधारणं लिङ्गं येन विशिष्टं प्राग्रूपमेवानेन लक्ष्येत न सामान्यप्राग्रूप, उभयोरपि अव्यक्तलिङ्गत्वसामान्यात्। अथ यस्य व्याधेर्यद्रूपं तदेवाव्यक्तं विशिष्टपूर्वरूपमिति चेद् व्याख्यायते, तर्हि रूपत्वप्रसङ्गो दुर्वारः स्यात्, उत्पन्नरोगेष्वपि जृम्भादीनां दर्शनात्। तस्मात् सति पुरस्तान्महर्षिप्रदर्शिते सरले मार्गे किमनेनाऽनृजुपथग्रहणवृथाग्रहेण ॥ ५ ॥

अथ रूपपदार्थं बोधयति—**उत्पन्नेति**। उत्पन्नस्य प्रादुर्भूतस्य व्याधेर्यानि लिङ्गानि लक्षणानि तानि तत्समुदायं रूपं रूपसंज्ञमाहुर्मनीषिणो गम्भीरधियः। बहुवचनोपात्तस्य लिङ्गपदस्य एकवचनान्तरूप-पदेनाभिधानात् लिङ्गसमष्टिरेव रूपं नत्वेकैकं लिङ्गं रूपमित्युक्तं भवति। उत्पन्नेति भूतार्थप्रयोगादुत्पद्यमानस्य व्याधेर्यल्लिङ्गं तद्विशिष्टपूर्वरूपं न तु रूपमिति सूच्यते। दोषदूष्यसंमूर्च्छनमात्रावस्थाया

[ अथ उपशयः ]

**औषधान्नविहाराणामुपयोगं सुखायतिम् ।**
**विद्यादुपशयं व्याधेर्गूढलिङ्गे स बोधकः ॥ ७ ॥**

---

भविष्यतो व्याधेर्यल्लिङ्गं तत् पुनः सामान्यं पूर्वरूपमेवेति स्फुटो भेदश्च । प्राधानमिति—व्याधिवोधाय, अयमसौ रोग इति संज्ञानिर्धारणाय, तद्रूपमेव प्रधानं परमोपयोगि यतस्तदेव ज्ञाननिश्चयद निःसन्देहज्ञानप्रदायि । अथ रूपलक्षण-प्रसङ्गे चरकः—"प्रादुर्भूतलक्षणं पुनर्लिङ्गम्" इति ( च० नि० १म अ० ) । अस्य चायमर्थो व्याख्यातृभिर्गृहीतः । प्रादुर्भूतस्य व्याधेर्यल्लक्षणं लक्षणसमुदायस्तल्लिङ्गं रूपसंज्ञम् । नन्वेवमुपद्रवारिष्टयोरपि रूपत्वं प्रसज्येत ? मैवम् । तयोर्व्याधिलिङ्गत्वा-भावात् । दोषप्रकोपोत्कटताविशेषलिङ्गं खलूपद्रवस्तृष्णामूर्च्छादिरन्येषु रोगेषु रोगान्तरवत् सम्भवन् । नियतमरणव्यापकश्चाऽसाधारणं लिङ्गमरिष्टं यथा "गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम् । लेपज्वरापतप्तस्य दुर्लभं तस्य जीवितम्" इति ( च० इन्द्रिय० ८म अ० ) । अथ शास्त्रे व्यवहारार्थरूपपर्यायाः यथा चरके—"आकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरमस्मिन्नेवार्थे" इति (च० नि० १ अ०) ।

ननु लिङ्गसमष्टिरेव चेद्रूपं तर्हि व्याधेरपि तादृक्तयाऽभिहितात् को भेद इति चेत्,– उच्यते । तत्तल्लक्षणसमष्टिबोधिताभ्यन्तरविकृतिपरम्परा एव परमार्थतो रोगा इति पूर्वोक्तसिद्धान्तस्मरणान्न दोषः । लिङ्गसमष्टीनां व्याधित्वाभिधानन्तु लौकिकसंज्ञाव्यवहारलाघवाय ॥ ६ ॥

अथोपशयं व्याचष्टे—**औषधेति** ।—औषधं जाङ्गलौद्भिदपार्थिवं त्रिविधं भेषजम् । अन्नमाहारः । विहारो व्यायामचंक्रमणादिः । तेषां सुखायतिमुत्तर-कालसुखप्रदं न तु केवलं सद्यःसुखप्रदमुपयोगं व्याधेरुपशयं विद्यात् । सुखा-यतिमिति विशेषणेन सामज्वरार्त्तस्य दध्यादिपानं सद्यस्तृप्तिकरमपि उत्तरकाले न हितमतो नोपशय इत्युक्तं भवति । व्याधेरित्यभिधानात् स्वस्थस्य पुरुषस्य सुखायतिरन्नाद्युपयोगो नोपशयपदवाच्य इत्यभिप्रायश्चाकलनीयः । ननु चिकित्साविषय एव, न निदानविषयस्तत् कथमिहोपन्यस्यत इति शङ्कां निरस्यन्नाह—**गूढलिङ्गे इति** । गूढलिङ्गे अस्फुटलक्षणे व्याधौ स उपशय बोधकः रोगसम्प्राप्तसूचकस्तस्मान्निदानविषयः । तदाहुः—'गूढलिङ्गं व्याधि-मुपशयानुपशयाभ्यां परीक्षेत' इति । रोगबोधकत्वञ्च—यतः खल्वस्य रोगिणः

**हेतोर्व्याधेश्चोभयोश्च विपरीतः स वा भवेत् ।**
**विपरीतार्थकारी वेत्यष्टादशविधश्च सः ॥ ८ ॥**

शीतमुपशेते नोष्णं तस्यादस्य पित्तोल्वणो व्याधिः स्यादित्यादि-दिशा द्रष्टव्यम् । अपरश्चोदाहरणं यथा चरके गुल्माधिकारे—"स्नेहोष्णमर्दनाभ्याञ्च यः प्रणश्येत् स वातिकः"—इति ; ( च० चि०३७ अ० ) । तद्देतावदुपशयार्थविज्ञानं पर्याप्तं निदानोपयोगीति पृथगुक्तम् ॥ ७ ॥

अथोपशयभेदानाह शिष्यबुद्धिवैशद्याय—हेतोरिति । हेतोर्व्याध्युत्पादक-कारणस्य, व्याधेः रोगस्य च, तथा उभयोर्हेतुव्याध्योश्च विपरीतः प्रतिकूलः स वा भवेत् । विपरीतार्थकारी वा, स्वयं विपरीतोऽभवन्नपि विपरीतार्थं रोगोपशमनं कर्त्तुं समर्थो वा स्यादिति—सोऽयं षड्विध उपशयः संक्षेपेण । स च प्रत्येक-मौषधान्नविहारभेदात्त्रिविध इति समष्ट्या अष्टादशविधः—इति विस्तराभिधानम् । तदुक्तं चरके—"उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणाञ्चौषधाहार-विहाराणामुपयोगः सुखानुबन्धः ।" तदुदाहरणानि च स्मरणसुखैः पद्यैर्यथा—"शुण्ठ्याद्यं कफजे ज्वरेऽतिसुखद ( इद हेतुविपरीतमौषधम् ), श्रान्त्युत्थवातोद्भवे पथ्यं मासरसौदन ( इति हेतुविपरीतमन्नम् ), त्वथ दिवास्वप्नोत्थिते श्लेष्मजे रात्रौ जागरणम् ( एष हेतुविपरीतो विहारः ) तथाऽतिसरणे पाठादिकं स्तम्भनम् इति व्याधिविपरीतमौषध प्रभावात् ), मासूरान्नमिह (इति व्याधिविपरीतमन्नं) प्रवाहण-मुदावर्त्ते सता सम्मतम् ( एष व्याधिविपरीतो विहार )॥ भैषज्यं दशमूलकं श्वसनजे शोथे ( इदमुभयविपरीतमौषधम् ) अथ तक्रं हित वातोत्थे ग्रहणीगदे च नियतं ( इत्युभयवितरीतमन्नम् ) तन्द्रां दिवास्वप्नजा रात्रौ जागरणं जयेद् ( इत्यु भयविपरीतो विहारः ) व्रणभवं शोथं प्रलेपोऽगुरोः ( इति हेतुविपरीतार्थकर-मौषधम् ) । अन्नं तत्र विदाहि पथ्यम् ( इतिहेतुविपरीतार्थकारि अन्नम् ) अनि-लोन्मादे तथा त्रासनम् ( इति हेतुविपरीतार्थकारी विहार ) ॥ छर्द्यां छर्दनकारकं मदफलं[1] ( इति व्याधिविपरीतार्थकारि औषधम् ) क्षीरन्त्वतीसारिणे इति व्याधिविपरीतार्थकारि अन्नम् ), वान्तौ वान्तिकर प्रवाहणम् ( इति व्याधिविपरी-तार्थकारी विहारः ) अथो पथ्यं विषेऽन्यद्विषम् ( इति हेतुव्याधिविपरीतार्थकारि औषधम् ) । मद्य मद्यकृते ( इति हेतुव्याधिविपरीतार्थकारि अन्नं ) जलप्रतरणं व्यायामजन्येऽनिले ( इति हेतुव्याधिविपरीतार्थकारी विहारः )—भैषज्यान्नविहार-वृन्दमखिलं ज्ञेयं सुधीरैः क्रमात् ॥" इति ।

१ । मदफल मदनफलम् ।

[ अथ सम्प्राप्तिः ]

अमुमाशयमाश्रित्य दोषा इत्थं गताः स्वयम्।
दूष्याशयेवं विकुर्वन्तो लिङ्गान्येतानि वै पृथक्।
जनयन्ति, गदो जातः सोऽयमीदृक्प्रकारकः।
ज्ञेयमेतादृशं प्राहुः सम्प्राप्तिं रुग्विचक्षणाः ॥ ६।१० ॥

---

अथेदमिहावधेयम्। विपरीतार्थकारिणो भेषजाहारविहाराः स्वयमविपरीतवत् प्रतीयन्ते न तु सर्वथा अविपरीता, यतो यदोच्यते "छर्दीषु बहुदोषासु वमनं हितमुच्यते" इति तदा दोषहरणमिष्टमिति, वस्तुतो हेतुप्रत्यनीकतैव। एवं यत्र अहिफेनविषे आलर्कविषे वा धुस्तूरप्रयोगस्तत्रापि प्रभाववैपरीत्याद् व्याधिप्रत्यनीकतैव। आहुश्च – "विषं विषघ्नमुक्तं यत् प्रभावस्तत्र कारणम्।" इति ( च० सू० २६ अ० )। तस्मात् सर्वत्र वैपरीत्ये सिद्धेऽपि आपातदृष्ट्या भिन्नानां भेषजाहाराचाराणां प्रयोगवैशिष्ट्यप्रदर्शनार्थं प्राचामनुरोधादष्टादशविध उपशयोऽभिहितः।

ननु सात्म्यमुपशयश्चेत्यनर्थान्तरं न वा? उच्यते। द्विविधं सात्म्यं प्रकृतिसात्म्यं व्याधिसात्म्यञ्चेति। तत्र प्रकृतिसात्म्यं—यदाहारविहारादि स्वस्थस्य सुखाय कल्पते। व्याधिसात्म्यं—यद् व्याधिग्रस्तस्य सुखाय, स उपशयः। न चानयोरभेदः—यतो यदेव स्वस्थस्य सुखाय तदेव व्याधिग्रस्तस्य उपशेते इति नियमं नाकलयामः। अतएव उपशयस्य व्याधिसात्म्यपदेनाभिधानम्। व्याधौ सात्म्यं व्याधिसात्म्यम्। यद्वा विशिष्ट आधिर्यस्य सोऽयं व्याधिः रोगग्रस्तः पुरुषः, तस्य सात्म्यं व्याधिसात्म्यम्। यत् पुनरिह रोगिणो नोपशेते, सोऽनुपशयः, स परमार्थतो निदानादभिन्न एव। व्याधिवर्द्धननिमित्तत्वेन निदानसामान्यात्। तथापि उपशयप्रतियोगितया तस्य पृथग् व्यवहारः। तस्य च व्याध्यसात्म्यमिति संज्ञा। अतएव वाग्भटः—"विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः"—इति ॥ ८ ॥

अथेदानीमशेषविशेषप्रकारकरोगनिरूपणमूलभूतां सम्प्राप्तिं शिष्यबुद्धिवैशद्याय विशदाक्षरैर्विवृणोति-**अमुमाशयमिति**। आशेरते दोषधातुमला एष्विति आशयाः, आमाशय-पक्वाशय-यकृत् प्लीह हृदय-फुस्फुसाद्याः, व्युत्पत्तिबलात् त्वगादयश्च। अमुमाशयं-साक्षात्परीक्षया अनुमानेन वा निरूपितं स्थानविशेषमाश्रित्य अधिकृत्य। स्वयमित्थंगताः - क्षीणाः प्रवृद्धा वा पृथग् द्विशस्त्रिशो वा विसर्पन्तः, दोषा वातपित्त-

**संख्या-विकल्प-प्राधान्य-बल-काल-प्रभेदतः ।**
**उपक्रमाय रोगाणां सम्प्राप्तिः परिचिन्त्यते ॥ ११ ॥**

---

कफाः, दूष्याणि रसरक्तादीनि, एवमनेन प्रकारेण विकुर्वन्तो विकृतिमापादयन्तः । एतानि दृश्यमानानि लिङ्गानि पृथक्—यथा दाहोऽयं पित्तकृतः, गौरवमेतत् कफकृतम्, तोदोऽसौ वायुकृतः—इत्येवम, जनयन्ति उत्पादयन्ति । सोऽयं लक्षणसमुदायात्मको वा तदुयोश्रिताभ्यन्तरविकृतिविशेषात्मको वा व्याधिरसौ बहुधा शास्त्रोक्तलक्षण-दर्शनेन भूयोदर्शनेन च प्रत्यभिज्ञातो ज्वरादिसंज्ञः, इत्थम्प्रकारकोऽभिन्यासादि-जातीयश्च, जातः उत्पन्नः—तदेवमेतादृशं ज्ञेयं रुग्विचक्षणा नैदानिकाः सम्प्राप्तिं प्राहुः । सम्यङ्निरूपितप्रकाराप्रामिरभिनिष्पत्तिः सम्प्राप्तिः । अशेषविशेषप्रकारोप-लक्षिता व्याधिनिष्पत्ति सम्प्राप्तिरिति संक्षेपः । चरकस्तु इतोऽपि संक्षिप्ततरमाह—"सम्प्राप्तिर्जातिरागतिरित्यनर्थान्तरं व्याधेः" इति । अत्र व्याधेर्व्याधिजन्मन इति व्याख्येयम् । अन्यथा सम्प्राप्तिजात्यागतिशब्दान् व्याधिसमानार्थान् मन्यमानो विशेषानभिज्ञो व्याधिनानयं पुरुष इति वक्तव्ये सम्प्राप्तिमानिति ब्रूयात् । व्याचष्टे पुनरिदं चरकचतुराननचक्रपाणि—"जातिर्जन्म, सम्प्राप्त्यागतिजातिशब्दैर्योऽर्थो-ऽभिधीयते व्याधेः सः सम्प्राप्तिरित्यर्थः । अत्रैके व्याधिजन्ममात्रमन्त्यकारण-व्यापारजन्य सम्प्राप्तिमाहुः । इयञ्च सम्प्राप्तिर्यद्यपि निदानादिवद् व्याधिबोधिका न भवति तथापि नानुत्पन्नस्य व्याधेर्लक्षणं भवतीति कृत्वा उत्पत्तेर्व्याध्युपलम्भकत्वं वर्णयन्ति । एतच्चान्ये नानुमन्यते, यतो नैवं सति सम्प्राप्तितः कश्चिद्विशेषो व्याधेरधिगम्यते । न चायं नियमः—यदुत्पन्न एव परं व्याधिरुपलभ्यते, यतो निदानपूर्वरूपाभ्यामनुत्पन्नो व्याधिर्भावित्वेनोपलभ्यते । तस्माद् व्याधिजनकदोष व्यापारविशेषयुक्तं व्याधिजन्मेह सम्प्राप्तिरिति ।'

यत्तु वाग्भटः—"यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामय-स्यासौ सम्प्राप्तिर्जातिरागति" रिति । अत्र यथा यथेति द्विरभिधाय निर्वृत्ति-प्रकारमेव विशेषेणाभिदधात्याचार्यो न निर्वृत्तिमात्रमिति निपुणधिया विभा-वनीयम् । अतो तादृशी निर्वृत्तिः तत्तत्प्रकारोपलक्षिता रोगोत्पत्तिरित्यभिसन्धि-राचार्य्यस्य, न तु पुनरुत्पत्तिमात्रे प्रयोजनम् ॥ ६।१० ॥

अथैतान् प्रकारविशेषांश्च दिग्दर्शनाय विशद प्राह—संख्येति । संख्यादि-प्रभेदतः प्रकृष्टभेदैः सम्प्राप्तिः परिचिन्त्यते । किमर्थम्? उपक्रमाय रोगाणां,

चिकित्सासौकर्य्याय। पूर्वोक्तलक्षणेन प्राप्तेऽपि वक्तव्ये पुनरभिधानं विशेष-प्रतिपादनाय।

तत्र सङ्ख्याभेदः प्रायो दोषभेदेन जातिभेदेन च दृश्यते, क्वचित् साध्यत्वादि-भेदेन च। तत्र दोषभेदेन यथा—"अष्टौ ज्वरा, पञ्च गुल्माः" इत्यादि। जाति-भेदेन यथा —सप्त महाकुष्ठानि, कपालौदुम्बरादिभेदात् (च० चि० ७म अ०)। उपक्रमविशेषश्च दोषभेदेन प्रसिद्ध एव। जातिभेदेन यथा कपालादिकुष्ठेषु पृथगौषधविधानात्। विकल्पः—दोषसाङ्कर्य्ये लिङ्गबाहुल्यादिदर्शनेन अंशांशकल्पना यथा शैत्य-कम्प-शुषिरता-भ्रमादिभिर्वायोराधिक्यं, दाहतृष्णामोहादिसद्भावात् पित्त-स्येत्यादि। उक्तञ्च सुश्रुते—"सर्वं भावस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः। संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति"—इति (सु० सू० २१ अ०) चिकित्सा-क्रमोपदेशश्च तत्रैव यथा—संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत्। शेष-दोषाऽविरोधेन सन्निपाते तथैव च॥" इति। विकल्पविशेषैः स्थानान्तराश्रयेण च सम्भवन्तो रोगविशेषास्तु चरके कियन्तःशिरसीयाध्याये—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये। स्थानादादाय गात्रेषु यत्र यत्र प्रसर्पति। तदा तोदश्च दाहश्च तत्र तत्रानवस्थितः। गात्रदेशे भवेत्तस्य श्रमो दौर्बल्यमेव च"—इत्यादिसन्दर्भेण प्रतिपादिता नेह विस्तरभयाल्लिखिताः। प्राधान्यं—व्याधिसङ्करे जाते सोपद्रवे बहुलिङ्गे वा व्याधौ एकस्य प्रधानता, अन्यस्य अनुबन्धमात्रता—यथा वातश्लेष्मज्वरे कासप्रतिश्यायादीनामप्रधानता ज्वरस्यैव प्रधानता। क्षयरोगे तु ज्वरादीनां सर्वेषामप्रधानता, क्षयस्यैव फुस्फुसक्षतस्य वा प्रधानता। एवं जीर्ण-ग्रहण्यां ज्वरे जाते ग्रहण्याः प्रधानता ज्वरस्याप्रधानता। बलं—व्याधेः सर्वसम्पूर्ण-लक्षणत्वे पूर्णबलं, मध्यमलक्षणत्वे मध्यबलमित्येवमादि। कालः—वयोऽहो-रात्रिभुक्तानामन्तमध्यादिक्रमेण षड्ऋतुविभागेन च वातादीनां क्षयवृद्धिदर्शनात् प्रतिनियतो ह्रासवृद्धिनिरूपितो व्याधिकालः। तत्र वयोऽनुसारेण यथा—वार्द्धक्ये वायुर्वर्द्धते, यौवने पित्तं, बाल्ये कफः। अह्नः—शेषे वायुर्मध्ये पित्तमादौ कफः। एवं रात्रेरपि। भुक्तस्य—अन्ते जीर्णप्रायेऽन्ने वायुः, मध्ये पच्यमानेऽन्ने पित्तम्, आदौ भुक्तमात्रे कफः। एवमृतुष्वपि—यथा वर्षासु वायुः, शरदि पित्तं, वसन्ते श्लेष्मेति। तदेवं कालादिषु नियमेन वर्द्धमानो हीयमानो वा व्याधिर्वातिकादि-प्रकारकसम्प्राप्त्या बोद्धव्यः। ननु चरके—सम्प्राप्तिवर्णने विधिरप्युक्तः, स कथमिह नोच्यते? सत्यं, सङ्ख्यायामन्तर्भावेन लाघवान्नोक्तः। विधिर्हि गत्यादि-हेतुविशेषमाश्रित्य एकजातीयेषु प्रवर्त्तमानो विभागः— यथा द्विविधं रक्तपित्त-

निदानार्थकरो रोगो रोगस्याप्युपलभ्यते ।
स्वयं शाम्यति तिष्ठेद्वा, बहुधा रोगसङ्कराः ॥ १२ ॥

मूर्द्धगमधोगञ्चेति । संख्या तु दोषजादिभेदेन सजातीयेषु विजातीयेषु च प्रवर्त्तते इति संख्यायां विधेरन्तर्भावः । विभागहेतुदृष्टान्ताश्च यथा—उपक्रमसौकर्य्यहेतुको विभागः- व्याधीनां साध्यासाध्य मृदु-दारुणभेदेन । निदानहेतुको विभागः—निजागन्तुभेदेन । दोषहेतुको विभागः—यथा अष्टौ ज्वराः इत्यादि । तदेतदशेषविशेषप्रकारकोपलक्षितो व्याधिजन्मावस्थाविशेषः सम्प्राप्तिभिषजा सर्वथाऽवश्यं ज्ञातव्या, रोगतत्त्वपरिज्ञानाय चिकित्सामार्गाविष्करणाय चेति तत्त्वम् ॥ ११ ॥

अथ निदानपञ्चकमभिधाय रोगाणामपि कदाचित्कं निदानत्वं रोगसाङ्कर्य्यञ्च दर्शयति—निदानेति चरकीयवचनेन । एको रोगोऽन्यस्य रोगस्य निदानार्थकरः स्वयं निदान न भवन्नपि निदानार्थं रोगत्पादन कुर्वन्नुपलभ्यते दृश्यते । नन्वेवं सामान्यविशिष्टनिदानाभ्यामतिरिक्तमिदंनिदानमिति चेत्, न । सत्येकस्मिन् दृढमूले रोगे तद्दुर्बलशरीरस्य पुरुषस्य स्वल्पेनापि पुनर्निदानसंयोगेन भूयः प्रकुपितैः प्रायस्तैरेव दोषैर्जन्यतेऽपरो रोग., तेन पररोगं प्रति पूर्वरोगस्य परम्परयैव कारणता न साक्षात्, कुलालपितुर्घटं प्रति कारणतावत् । अतएवोक्तं महर्षिणा "निदानार्थकर" इति । स चैव निदानार्थं कुर्वन् रोगः स्वयं शाम्यति विलीनप्रायो भवति, क्वचित्तिष्ठेद्वा—इति विचित्र एव रोगेण रोगस्य सम्बन्धः । अतएवोपसंहरति—'बहुधा रोगसङ्करा" इति । रोगाणां परस्परमिश्रीभावा नानाप्रकारा इत्यर्थः । तद्दृष्टान्ताश्च चरके यथा—"ज्वरसन्तापाद्रक्तपित्तमुदीर्य्यते । रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युजायते । प्लीहाभिवृद्ध्या जठरं जठराच्छोफ एव च । अर्शोभ्यो जठरं दुःखं गुल्मश्चाप्युपजायते । प्रतिश्यायादथो कासः कासात् संजायते क्षयः । क्षयो रोगस्य हेतुत्वे शोषश्चाप्युपजायते । ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः । उभयार्थकरा दृष्टास्तथैवैकार्थकारिण । कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति । न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसंकराः ॥" इति ( च० नि० ८ अ० ) । प्रयोजनञ्च व्याधिसङ्करविज्ञानस्य रोगाणां स्वातन्त्र्य-पारतन्त्र्यादिविनिर्णयेन चिकित्सापथाविष्करणमिति दिक् ॥ १२ ॥

स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून्॥ १३॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत्॥ १४॥

---

अथ सम्प्राप्तिभेदेन जायमानानां रोगाणामानन्त्यं समासेन प्रतिपादयन्नाह पुनश्चरकीयवचनेन—स एवेति। स एव, समान एव दोषो वातादिः। एकवचनमतन्त्रं, तेनैको दोषो द्वौ वा दोषौ त्रयो वा दोषा इत्यभिप्रायः। कुपितः क्रुद्धः सन्, उपलक्षणात् क्षीणोऽपि। समुत्थानविशेषतो निदानवैशेष्यात्। स्थानान्तरगतो नानाविधस्थानसंश्रयं कुर्वंश्च। एतेन स्थानसंश्रयभेदकृतानि लिङ्गानि पृथगेव प्रायः—इति सूच्यते। चकारात् विकल्पविशेषैर्भिन्नलक्षणश्च। बहूनामयान् रोगान् जनयति। तत्र समुत्थानविशेषतो यथा विजया-धूस्तुरयोर्वातप्रकोपणत्वे तुल्येऽपि तत्कृतलक्षणानां भूयान् प्रभेदः। एवं स्थानभेदाद् यथा कुपितो वायुः कण्ठगतः स्वरभेदादिमन्त्रगतश्च शूलानाहादिं जनयतीत्येवमादि पूर्वमुक्तं, तद्विस्तरश्च चरके त्रिशोथीयाध्याये द्रष्टव्यः। स्थानसंश्रयेण सम्भवन्तो रोगाश्च चरके कियन्तःशिरसीये तदभिज्ञगुरुसविधे चावलोकनीयाः॥ १३॥

अथोपसंहरति चरकीयवचनेन-तस्मादिति। तस्मात्—यतो दुर्विज्ञेया रोगाणामशेषविशेषप्रकारास्ततो हेतोः। विकारप्रकृतीः रोगस्वभावान्—किंनामायोऽयं रोगः, किञ्जातीयः, कदा ह्रासवृद्धिशीलः, किमुपशयः, केन रोगेण कथङ्कारं संकीर्णः, साध्यो याप्यः प्रत्याख्येयो वा—इत्येवमादीन् विशेषान्। अधिष्ठानान्तराणि अधिष्ठानानां रोगाश्रयाणामाशयादीनामन्तराणि अवधिविशेषान्, स्थानाश्रयभेदान् वा। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये"—इत्यमरः। एतेन दोषगतिविशेषाः रोगमार्गाश्चोक्ताः। तथाहि चरके,—"क्षयः स्थानञ्च वृद्धिश्च विज्ञेया त्रिविधा गतिः। त्रिविधा चापरा कोष्ठ-शाखा मर्मास्थिसन्धिषु' इति। समुत्थानानि निदानानि रोगोत्पादकबाह्यनिमित्तानि। तेषां विशेषान् निमित्तनैमित्तिकसम्बन्धविज्ञातान् प्रकारान्। तदुक्तं—'एको हेतुरनेकस्य तथैकस्यैक एव हि। व्याधेरेकस्य चानेको बहूनां बहवोऽपि च। ज्वरभ्रमप्रलापाद्या दृश्यन्ते रूक्षहेतुजाः। रूक्षेणैकेन चाप्येको ज्वर एवोपजायते॥ हेतुभिर्बहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत्। रूक्षादिभिर्ज्वराद्याश्च व्याधयः सम्भवन्ति हि॥' इति (च० नि० ८ अ०)। तानेतान् विशेषान् बुद्ध्वा सम्यङ् निरूप्य कर्म समाचरेत् चिकित्सामारभेत, न तु

**यो ह्येतत् त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक् ।**
**ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥ १५**

पाणिचाराद्न्धवद् भीतभीतवद्वा किञ्चिन्मात्रदर्शी चिकित्सायां प्रवर्तेत— इत्यभिसन्धिः ॥ १४ ॥

अथ विकारादीनां सम्यक् परिज्ञाने फलमाह चरकवचनेनैव— **यो हीति—**

यः खलु भिषगेतत् पूर्वोक्तं विकारप्रकृत्याद्यित्रयं, ज्ञानपूर्वं शास्त्रोपदेशवृद्धितानुभवपूर्वं, तथा यथान्यायं सम्यग् युक्त्यनुसारतश्च, ज्ञात्वा कर्माणि आरभते चिकित्सायां प्रवर्त्तते, स कर्मसु रोगप्रशमादिफलकेषु वमनविरेचनादिप्रयोगेषु न मुह्यति मूढवन्नापथे गच्छति । ज्ञानपूर्वं यथान्यायमिति विशेषणद्वयं शास्त्रानुगत्या स्वविवेकस्यापि प्रयोजनमाविष्करोति । तदुक्तं वाग्भटेन— "अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् । वर्जयेत्तान् भिषक्पाशान् पाशान् वैवस्वतानिव । इति—( अष्टाङ्ग सं० उत्तर ४० अ० ) ॥ १५ ॥

इति भारतसम्राट्प्रदत्त-महामहोपाध्यायोपाधिक-
वैद्यराज- श्रीगणनाथसेन शर्म सरस्वती प्राणाचार्य विरचिते

## सिद्धान्त-निदाने

व्याधिविज्ञानाख्यो द्वितीयोऽध्यायः ।



## अथ तृतीयोऽध्यायः ।

[ व्याधिपरीक्षा ]

दर्शनस्पर्शनप्रश्नैर्विज्ञायन्तां त्रिभिर्गदाः ।
इति केचिन्न सम्यक् तत्, साधनं षड्विधं यतः ॥ १ ॥
श्रोत्र-त्वङ्-नेत्र-रसना-घ्राण-प्रश्नैः प्रयोजितैः ।
यथाज्ञानं परीक्षेति धन्वन्तरिरभाषत ॥ २ ॥
तत्र श्रौती परीक्षा स्यादुरोरोगेषु तद्यथा ।
उरसि श्रूयते वायुः सश्लेष्मा बुद्बुदायितः ॥ ३ ॥

---

अथ व्याधिविज्ञानमार्गमादौ दर्शयित्वा व्याधिविज्ञानोपायाननुवर्णयति—**दर्शनेति** । एष सौश्रुतसन्दर्भस्यानुवादः । दर्शनं दृश्यानां विशेषाणामातुरे प्रत्यक्षीकरणम् । स्पर्शनं यकृत्-प्लीहादीनामङ्गुष्ठमूलगाया धमन्याश्च । प्रश्नाः—रोगोऽयं कदा किंलक्षणः प्रादुर्भूत इत्येवमादयः ।—इति त्रिभिरुपायैः गदा रोगा विज्ञायन्तामिति केचित् । तत्तु न सम्यक् यतः साधनं रोगविज्ञानकरणं षड्विधमग्रे वक्ष्यते । नन्वेवमालोकादीनामपि साधनताऽस्तु इति चेन्न । सर्वसामान्यात् । समानं हि तावदालोकादिकं सर्वेषाम् इह तु परीक्षकनिष्ठविशिष्टसाधनानामेवोपयोगः ॥ १ ॥

धन्वन्तरिमतमाह—**श्रोत्रेति** । श्रोत्रं श्रवणेन्द्रियं त्वक् स्पर्शनेन्द्रियं, रसना जिह्वा, घ्राणं घ्राणेन्द्रियम्, प्रश्नाः पूर्वोक्ता वागिन्द्रियप्रयुक्ताः । यथाज्ञानमिति गुरूपदेशसहकृत स्वानुभवानुसारादित्यभिप्रायः । धन्वन्तरिरभाषतेति धान्वन्तरीयसम्प्रदायस्य मतमेतत् सुश्रुतोक्तम् । आत्रेयसाम्प्रदायिकास्तु रासनप्रत्यक्षं निषेधन्ति । यथाह चरकः—'प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्समानः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्थानातुरगतान् परीक्षेत, अन्यत्र रसज्ञानात्" इति (च० वि० ४ अ० ) । इह ग्रन्थकृतापि रासनी परीक्षा निषिद्धैव ॥ २ ॥

तत्र श्रावणं प्रत्यक्षमाह—**तत्रेति** । उरोरोगेष्वित्युपलक्षणम्, अन्त्रकूजनस्वरभङ्गादीनामपि श्रावणमेव प्रत्यक्षं भवति । उरोरोगाः फुस्फुस हृदयन्त्रादिरोगाः । तत्रैको दृष्टान्तः यथा—श्वासमार्गेषु श्लेष्मणा किञ्चिदावृतमार्गः श्वासवायुर्जलबुद्बुदशब्द[१] कुर्वन् श्रूयते । अपरे दृष्टान्तास्तु यथा—तमकश्वासादौ वंशीध्वनिवच्छब्दः,[२] हृद्रोगेषु हृत्प्रतीघातेन सह नाडीधमनवद् ध्वनि[३], इत्येवमादयो

---

१ । Rales  २ । Ronchi  ३ । Bruit.

त्वाची परीक्षा शीतोष्ण-धमनीगतिबोधिनी।
यकृत्प्लीहादिसंस्थानसूचनार्थाऽपि सोच्यते ॥ ४ ॥

गुरुवक्त्रगम्या। श्रवणञ्च तद् द्विविधम्। साक्षाद् दूरत एव - यथा श्वासादिरोगे श्वासमार्गस्थो घुघु रशब्द। समीपतो वा—यथा कर्णसंयोगेन। कर्णसंयोगश्च नाडीयन्त्रसहकृत. केवलो वा इदानीन्तनानान्तु नाडीयन्त्रविशेपसहकृत एव प्रेयान्, सौकर्यात्। स च नाडीयन्त्रविशेपः[1] सुश्रुतोक्तनाडीयन्त्रेष्वन्तर्भाव्य.। इयञ्च श्रावण-प्रत्यक्षविषयता सुश्रुतेऽप्युक्ता—यथा "सफेन रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादय. श्रवणेन्द्रियविज्ञेया." इति (सु० सूत्र० १० अ०)। न च शङ्क्यं व्रणास्रावादिविज्ञानमेव सुश्रुतसन्दर्भस्य विपयस्तेन शल्यतान्त्रिकाणामेव श्रावणपरीक्षोपदेश इति। कायचिकित्साविपयाणां क्षतजकासोरःक्षतादीनामपि व्रणत्वसामान्यात्, अव्रणेष्वपि श्वासरोगादिषु श्लेष्मसञ्चयादिविज्ञानार्थं श्रावण-परीक्षाया आवश्यकत्वाच्च ॥ ३ ॥

स्पर्शनेन्द्रियप्रत्यक्षमाह—त्वाचो त। शीतोष्णयोरनुभवो यथा ज्वरादिषु। उपलक्षणात् खर-श्लक्ष्णादीनामपि त्वग्रोगादिषु। धमनीगतिरङ्गुष्ठमूलस्थाया जीवसाक्षिण्या धमन्या स्पन्दनम् नाडीगतिरिति लोकप्रसिद्धम्। सा चान्याश्च सर्वा धमन्यो हृदयप्रभवाः। हृदयं हि धमनीद्वारेण सर्वत्र शरीरे शोणित धमति, तत्र पुनरिमे विशेषा लक्षणीयाः संक्षेपात्—गतिः, यतिः, आकृतिः, संहतिश्च। तत्र गतिर्नाम वेगः,[2] यद्भेदेन नाड़ी मन्दा द्रुता वा भवति। यति.[3] स्पन्दनानां समान्तरालता विषमान्तरालता वा, यद्भेदेन नाड़ी समा विसमा वा भवति, हंससर्पादिगतिश्च कथ्यते। आकृति.[4]-स्थूल-मध्य-कृशानामन्यतमा यथा समावस्थाया नाड़ी स्थूला पुष्टा वानुभूयते, निरामावस्थायान्तु कृशा क्षीणा वा, मध्याकृतिः स्वभावे। संहतिः,[5] अंगुल्या धमनीनिष्पीड़ने कोमलतया कठिनतया वाऽनुभवः। तदेतच्चतुष्टय नानाविधविकल्पैर्भिद्यमानमनेकानुभवविशेषेषु पर्यवस्यति। ते च विशेषाः नाड़ीविज्ञानग्रन्थेभ्यो गुरूपदेशानुभवाभ्यां च संवेद्याः।

अंगुलीचेष्टादिसहकृतां त्वाचीं परीक्षां पुनर्विशिष्याह—यकृत्प्लीहादीति। सा त्वाची परीक्षा यकृत्प्लीहादीनां संस्थानविशेषसूचनार्थाऽपि। तत्र दक्षिणतो यकृद्, वामत प्लीहा। आदिपदेन आमाशय-पक्वाशय-वृक्क-वस्त्यादीनाञ्च। यकृत्-प्लीहादीनां कियती वृद्धिः, कीदृशं काठिन्यमित्यादिबोधो हि तत्तदवयवानामङ्गुल्यादिभिः

१। Stethoscope २। Speed ३। Rythm ४। Volume ५। Consistency or pressure ( Blood-pressure )

चाक्षुषी तु भवेद् वर्णोपचयादिप्रदर्शिनी।
प्रमेहादिरसज्ञाने रासनी, सा न शस्यते॥ ५॥
माधुर्य्यादिपरिज्ञानसाधने बहुधा स्थिते।
कोऽधुना नु प्रयुञ्जीत जिह्वां मूत्रपरीक्षणे॥ ६॥
घ्राणेन ज्ञायते गन्धः श्लेष्मपूयासृगादिषु।

---

कुशलतया पीड़नेन भवतीति चेष्टाविशेषसहकृता त्वाचीयं परीक्षेति विशेषः। सेयं परीक्षा तादृशपरीक्षादक्षगुरूपदेशाद् भूयोदर्शनेन सम्यक् कर्त्तुं शक्या, न शास्त्रोपदेशमात्रेण ॥४॥

चाक्षुषी परीक्षामाह—चाक्षुषीति। चाक्षुषी दर्शनेन्द्रियकृता या परीक्षा। वर्णः कृष्णगौरपीतादिः, उपचयः शरीरपुष्टिः। आदिपदात् व्रणेषु उत्सेधादिश्च, तेषां प्रदर्शनशीला। नेत्र जिह्वा-मल मूत्रादि-परीक्षापि चाक्षुषी परीक्षैव। सा च द्विविधा केवला, यन्त्रादिसहकृता च। तत्र केवला या यन्त्रादि-सहायतां विनैव क्रियते जीवच्छरीरस्य। रोगमृतस्यापि आभ्यन्तरयन्त्रादिविकृतिदर्शननिष्पाद्या तत्त्वाविष्करणार्था च परीक्षाक्रियते—यथा - सद्योमृतस्य यक्ष्मिणः उरश्छेदेन दृश्य। फुस्फुसव्रणादिविकृति। यन्त्रादिसहकृता तु नाड़ीयन्त्रादिभिर्निष्पाद्या यथा नासा कर्ण कण्ठ गुदादिपरीक्षा। नव्यमतेन क्वचित् अणुवीक्षणादिसहायाऽपि परीक्षाऽस्ति यथा शोणित-श्लेष्मादिपरीक्षा।

अथ रासनी परीक्षा निर्दिश्य निषेधति—प्रमेहेति। रासनी परीक्षा प्रमेहादिरसज्ञाने मूत्रमाधुर्य्यादिपरिज्ञाने - इत्यभिसन्धिः। तदेतत् सुश्रुतमतम्। तथाह्युक्त—"रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः।" (सु० सूत्र० १० अ० इति) सा न शस्यते न प्रशस्ता, जुगुप्सितत्वात् परीक्षितुर्व्याधिकारित्वात् प्रशस्यतरपरीक्षान्तरसद्भावाच्च इत्याकूतम्। तदेवाह—माधुर्य्यादीति। माधुर्य्यादि-परिज्ञानसाधने नवाविष्कृतपाश्चात्यपरीक्षाविधौ। स च परीक्षाविधिः छिन्नद्रव्य संयोगेन वर्णान्तरपरिणामादुपदिष्टः प्रतिपादितश्च तद्ग्रन्थेषु॥ ५।६॥

घ्राणकृता परीक्षामाह—घ्राणेनेति। श्लेष्मा, पूयम् असृग् रक्तञ्च,आदिपदात् मल-मूत्र-रजःप्रभृतयः। तेषु गन्धविशेषाः प्रायेण दूरादपि किञ्चित् सन्निकर्षेण वा ज्ञायन्ते। सुश्रुतेऽप्युक्त्—"घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषा" इति (सु० सूत्र० १० अ०)। उक्तञ्चान्यत्र —"दुर्गन्ध हरितं स्रावमित्यादि।"

प्रश्नैस्तु विद्यादखिलं रोगवृत्तान्तमादितः ॥ ७ ॥
इत्थं निखिलवृत्तान्तसम्यग्ज्ञानपरायणः ।
स्वातन्त्र्यं पारतन्त्र्यञ्च साङ्कर्य्यञ्च रुजां विदन् ।
निश्चिन्वानोऽथ सम्प्राप्तिं सम्पूर्णाङ्गां प्रयत्नतः ।
प्रयुञ्जानः क्रियाः सम्यग् भिषग् याति यशस्विताम् ॥८।९
शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः ।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन् नापराध्यति ॥१०॥

---

अथ प्राश्नीं परीक्षामाह—प्रश्नैरिति। आदितो रोगारम्भात् प्रभृति। अखिलं सर्वम्। तथाच सुश्रुतः—"प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलमन्तरग्निं वातमूत्रपुरीषाणां प्रवृत्त्य-प्रवृत्ती कालप्रकर्षादींश्च विशेषान्" इति (सु० सूत्र० १० अ०)। प्रश्नाश्च रोगलक्षण-विदैव सम्यक् प्रष्टुं शक्याः, याद‍ृच्छिकप्रश्नास्तु निष्फलप्रायाः। तदेवं सत्स्वपि षट्सु परीक्षाविधिषु रासनपरीक्षाया वर्ज्जनात् पञ्चविधैव परीक्षा वैद्यैः करणीयेति चरका-नुगत एव सिद्धान्तः पर्य्यवस्यति॥ अथोपसंहरति—इत्थमिति। इत्थं परीक्षा-विधिपञ्चकेन। स्वातन्त्र्यादि व्याख्यातपूर्वम्। निखिलवृत्तान्ताभिज्ञानं स्वातन्त्र्यादि-परिज्ञानञ्च चिकित्साया बहूपकरोति। तदनभिज्ञस्तु भिषगसम्यग्दर्शी रोगमूलम-स्पृशन्नुपद्रवमात्रं वा लक्षणमात्रं वा उपक्रमते, अयशश्च प्राप्नोति याद‍ृच्छिकीं वा सिद्धिं भाग्यवशात्। उक्तञ्च सुश्रुते—"मिथ्याद‍ृष्टा विकारा हि दुराख्यातास्तथैव च। तथा दुःपरिमृष्टाश्च मोहयेयुश्चिकित्सकम्।"—इति। सम्पूर्णाङ्गां "अनुमाशय"मित्याद्यशेषविशेषप्रकाराम्। क्रियाः चिकित्साविधीन्। सम्यगिति "शास्त्र-युक्तियुक्तोपक्रमस्यैव कर्त्तव्यतामुपदिशति। तदुक्तं—"याऽत्युदीर्णं शमयति नान्यं रोगं करोति च। सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्"—इति। एवञ्च क्षणिकोपशमनीं क्रियां कुर्वाणा अपि बहुधा प्रमाद्यन्ति नव्यभिषजः॥ ७।८।९॥

अथ स्थूणा-निखननन्यायेन रोगविज्ञानस्य अतिमात्रोपयोगित्वं पुनर्दर्शयति चरकीयश्लोकाभ्याम्-शास्त्रमिति (च० सूत्र० ९ अ०)। आलोकचक्षुःसंयोगेन हि रूपाभिव्यक्तिर्यथा भवति तथा दुर्विज्ञेयेष्वपि रोगतत्त्वेषु शास्त्रोपदेश विवेकाभ्यां सर्वार्थसिद्धिरित्यभिसन्धिः। शास्त्रं ज्योतिरालोकवदिति भावः। आत्मनो बुद्धिर्दर्शनं चक्षुर्वत्। सुयुक्ताभ्यां सम्यग्युक्ताभ्याम्। न हि सत्यपि शास्त्रे सत्स्वपि

आतुरस्यान्तरात्मानं यो नाविशति रोगवित् ।
ज्ञानबुद्धिप्रदीपेन न स रोगान् चिकित्सति ॥ ११ ॥

---

च ज्ञानेन्द्रियेषु बुद्धेर्वैकल्यात् सम्यग्ज्ञानं सम्भवति । नापराध्यतीति अन्यथाप्राप्तामपराधशङ्कां निवर्त्तयति । उक्तञ्च वागभटाचार्य्येण —' अज्ञात-शास्त्र सद्भावान् शास्त्रमात्रपरायणान् । वर्जयेत्तान् भिषक्पाशान् पाशान् वैवस्वतानिव ।" चरकेऽप्युक्तम् —"आतुराय शयानाय श्रद्दधानाय रोगिणे । यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति । त्यक्तधर्मस्य पापस्य मृत्युभूतस्य दुर्मतेः । नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥" इति ॥ १० ॥

उक्तमेवार्थं द्रढयति पुनश्चरकीयश्लोकेन आतुरस्येति । (च० वि० ४ अ०) यथा हि कस्मिंश्चिदन्धकारमये गृहे प्रदीपं विना प्रविशन् पुरुषो नार्थमभिमतमासादयति स्खलति च प्रायेण पदे पदे, तद्वदिति भावः । दृष्टान्तञ्चात्रोदाहरन्ति- "पाणिचाराद् यथाऽचक्षुरज्ञानाद् भीतभीतवत् । नौर्मारुतवशेवाज्ञो भिषक् चरति कर्मसु ।" इति । अन्यत्राप्युक्तं—"यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक् । अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया । यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः । देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥" ( च० सूत्र० २० अ० ) इति ॥ ११ ॥

इति भारतसम्राट्प्रदत्त-महामहोपाध्यायोपाधिक-
वैद्यावतंस श्रीगणनाथसेन शर्म-सरस्वती प्राणाचार्य विरचिते

**सिद्धान्त-निदाने**

रोगपरीक्षाभिधस्तृतीयोऽध्याय. ॥



स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम् ।
स्रोतांसि रुद्ध्वा सम्प्राप्ताः केवलं देहमुल्वणाः ॥ ४ ॥

सन्तापमधिकं देहे जनयन्ति नरस्तदा ।
भवत्यत्युष्णसर्वाङ्गो ज्वरितस्तेन चोच्यते ॥ ५ ॥

---

मतन्त्वम् । तेनैको दोषः द्वौ वा दोषौ त्रयो वा दोषाः—इति योजना । रसाख्यं धातुमन्वेत्य अनुगम्य । अन्नस्य सारभूतो धातुरामाशयादन्त्रेभ्यश्चाकृष्यमाणो यकृद्द्वारेण रसप्रपाद्वारेण वा रक्तस्रोत-सञ्चारी रस इत्युच्यते । तदनुगमनञ्च दोषाणां रसायनीः प्रपद्यैव । तदुक्तं वाग्भटेन –"प्रतिरोगमिति क्रुद्धा रोगाधिष्ठान-गामिनी. । रसायनी प्रपद्याशु दोषा देहे विकुर्वते" । ( अष्टाङ्गहृ० नि० १ अ० ) । दोषोत्थानञ्चामाशयादिति एव सम्भवति, तस्मादामाशये पक्वाशये वा निजज्वराणां मूलमन्वेष्यमित्यभिप्रायः । अतएवाग्निवेशनिदाने—"दोषोऽजीर्णाज्ज्वरं कुर्यादिति" । यत्तु सुश्रुतेनोक्तं—"दुष्टाः स्वहेतुभिर्दोषा प्राप्यामाशयमूष्मणे"त्यादि, तत्रामाशय इति आम-पक्वाशययोरुपलक्षणं बोध्यम् । आमाशयसमुत्थः पक्वाशयसमुत्थश्चेति द्विविधज्वरस्य शास्त्रयुक्तिसिद्धत्वात् । पक्तिं पाचकाग्निं स्थानात् स्वाधिष्ठानात् समग्रादन्नवहमार्गात्, निरस्य वहिस्त्वचि निःक्षिप्य । एतेन निजज्वरेषु लङ्घनप्रयोजनं सूचितम् । तेन वहिर्निःक्षिप्तेन स्वेनोष्मणा पाचकाग्निसन्तापेन देहोष्मणः स्वाभाविकस्य सर्वदिकसन्तापात्मकस्य वलं वलवृद्धिं कृत्वा । स्रोतांसि स्वेदादिमार्गान् रुद्ध्वा आमरसबाहुल्यादाभ्यन्तरसन्तापाधिक्याच्च स्वेदादिवहस्रोतसामवरोधं कृत्वा । केवलं देहं सर्वं कायं सम्प्राप्ताः । उल्वणाः धातुक्षयकारित्वेन प्रज्वलन्त इव । देहे वहिस्त्वचि धातूनामभ्यन्तरतश्चाधिकं सन्तापं जनयन्ति । तेन सर्वधातूनां दह्यमानत्वेनात्युष्णसर्वाङ्गो नरो ज्वरित उच्यते । तदिदं सम्प्राप्तिवर्णनमात्रं न लक्षणम् । लक्षणन्तु सामान्यात् सन्तापाधिक्यमिति पूर्वमवोचाम । इदञ्चात्रावधेयम्—यावद् यावन्मात्रं सन्तापाधिक्यन्तावत्तावन्मात्रा कोष्ठाग्नेरपि मन्दताऽवगन्तव्या । अपतर्पणादि प्रयोजनञ्च तावदेव भवितुमर्हति । तेन रससामतानिरसनमेव निजज्वराणां मुख्यश्चिकित्सितमित्युन्नेयम् । अत एवाहुः—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः । पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे" इति । आगन्तुज्वरेषु तु सत्यपि सन्तापाधिक्ये मांसरसादि पथ्यमुपदिशन्ति, धातुक्षयवारणाय । यत्तु सुश्रुतवचनोद्धारी माधवः "स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणन्तथा" इत्यादि ज्वर-

( पूर्वरूपम् )

श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ ६ ॥
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे ॥
सामान्यतो, विशेषात्तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम् ॥ ७८ ॥

---

लक्षणमाह, तत्र स्वेदावरोध इति व्याचक्षाणो डल्लनः "स्वेदावरोधः स्वेदाऽनिर्गमः एतच्च प्रायिकं लक्षणं, पैत्तिके स्वेदनिर्गमाद्"—इत्यभिदधे । चरके तु कण्ठेन प्रायिकत्वमुक्तं यथा —'स्रोतसा संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति । स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे" इति । तेन"स्वेदोऽग्निः स्विद्यतेऽनेनेति व्युत्पत्त्या तस्यावरोधो दोषव्याप्ति"रिति विजयरक्षितव्याख्यानमाग्रहमूलमेव । वस्तुतस्तु सुश्रुतोक्तिर्न लक्षणं किन्तु दिक्प्रदर्शनमात्रमिति न दोषः ॥ ३ - ५ ॥

अथ निजज्वराणां सामान्यपूर्वरूपमाह—**श्रमोऽरति**-रित्यादिना सौश्रुत-सन्दर्भेण ( सु० उत्तर० ३९ अ० ) । श्रमोऽकृतश्रमस्यापि श्रान्तिबोधः । अरतिः शयनासनादौ सुखाभाव । विवर्णत्वं विशिष्टवर्णत्वं रौद्राभितप्तस्येव । वैरस्यं स्वाभाविकसुखास्वादस्य विकृतिः । नयनप्लवः वाष्पपूर्णनेत्रता । शीतादिषु-मुहुः भृशमनवस्थितौ इच्छाद्वेषौ अनुरागविरागौ, आदिपदात् प्रियजनादिष्वपि । अङ्गमर्दः—अङ्गानान्त्रुट्यत्प्रायता । गुरुता गात्राणा शिरसश्च । अरुचिरन्नादिषु । तमोऽन्धकारदर्शनमिव । अप्रहर्षः दुःखितप्रायत्वम् । केचित्तु व्याचक्षते—प्रहर्षः कामोद्रेककृतं शिश्नोत्थान, तदभावः प्रमदालिङ्गनेऽपि उद्रेकाभाव इति । शीतं हिमर्त्ताविव शीतस्पर्शानुभव ।—इत्येतदखिलमेवाल्पाधिकं सामान्यतः, सर्वज्वर-सामान्येन उत्पत्स्यति भविष्यति ज्वरे भवति—इति परेणान्वय. । परस्मैपदमार्षम् । एकवचनान्तक्रियानिर्देशात् सर्वेषामेव पूर्वरूपाणां युगपत् प्रायोभावित्वं सूच्यते । न च शङ्क्यं, सर्वेषां पूर्वरूपाणा दर्शने दुःसाध्यताऽसाध्यता वा स्यात्, यदुक्तं "पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । य विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसर." —इति । अतिमात्रयेत्यभिधानात् । अतिमात्रयैव हि सम्भवन्ति पूर्वरूपाणि सर्वाणि घोरतासूचकानि नत्वल्पमात्रया—इति विशेषविद. ।

# अथ चतुर्थोऽध्यायः ।

[ ज्वरलक्षणम् ]

**ज्वरः प्रधानो रोगाणां त्वचि सन्तापलक्षणः ।**
**देहेन्द्रियमनस्तापी निजश्चागन्तुजश्च सः ॥ १ ॥**

अथ ज्वरस्य सर्वरोगाग्रजत्वात्तन्निदानमेवादावुपक्रमते—**ज्वर इति** । रोगाणा मध्ये ज्वरः प्रधानः प्राधान्येन ज्ञातव्यः सर्वधातुक्षयापादकत्वात् सर्वरोगपूर्वजत्वाद् जन्ममरणयोरवश्यम्भावित्वाद् निखिलस्थावरजङ्गमविषयत्वाच्च[१] । ननु यक्ष्मादिषु ज्वरो लिङ्गमात्रं, न स्वतन्त्रो व्याधिरिति कथं ज्वरस्य प्रधानतोच्यते ? सत्यं, केषुचिद्रोगेषु ज्वरो लिङ्गमेव, तथापि प्रायः सर्वरोगाणां ज्वरपूर्वत्वात् ज्वरजन्यधातुक्षयस्य प्राधानिकलिङ्गत्वात् सर्पाणामिव ज्वराणामप्यसंख्यजातीयानां प्रभूतानिष्टकारित्वाच्च तस्य प्रधानता न प्रतिहन्यते । यक्ष्मादिष्वपि प्रवृद्धज्वरविशेषः "प्रलेपक"संज्ञाभिधेयस्तदुपक्रमोऽपि विशेषात् करणीयो भवत्येव ।

अथासौ ज्वरो बहुधा भिन्नरूपोऽपि मूलत एक एवेत्याह चरकानुशासनेन—**त्वचि सन्तापलक्षण इति** । तथाह्युक्तं "ज्वरस्त्वेक एव सन्तापलक्षणः"[२] इति (च० नि० १ अ०) । ननु रौद्राग्निसेवयापि क्षणिकस्त्वक्सन्तापो दृष्ट इति तद्वारणार्थं विशिनष्टि—**देहेन्द्रियमनस्तापीति** । न च देहग्रहणादेव त्वग्ग्रहणमिति त्वचि सन्तापस्य पौनरुक्त्यं शङ्क्यं, विशेषप्रतिपत्तेः । त्वग्गतसन्तापविशेषो हि सर्वजनैः संवेद्यः, इतरे सन्तापास्तु रोगि-वैद्याभ्यामेव । देहपदेन हि सामान्यतः सर्वधातूना ग्रहणम् । स च ज्वरः सामान्याद् द्विविधः—निजो दोषकृतः, आगन्तुज आगन्तुहेतुकोऽभिघातादिनिमित्तश्चेति । एवमग्रे सर्वरोगेष्वपि सामान्याद्द्विविधो विभागो द्रष्टव्यः । यदाहुः "द्विविधा प्रकृतिरेषामागन्तुनिजविभागादिति" (च० सू० २० अ०) । वस्तुतस्तु ज्वरे दोषकृतभेदाद् धातु काल-जात्यादिकृतो भेद एव गरीयान् । अतएव चरकश्चिकित्सिते ज्वरस्य पूर्वरूपमात्रमभिधाय त्रिध्यादिकृतानेव भेदान् प्रधानतो व्याचष्टे, तेषामेव चिकित्सायां परमोपयोगित्वात्, यथा—"द्विविधो विधिभेदेन ज्वरः शारीरमानसः । पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च । अन्तर्वेगो बहिर्वेगो द्विविधः

---

१ । तथाहि चरके—"त्वमुवाचेश्वरं क्रोधं ज्वरो लोके भविष्यसि । जन्मादौ निधने च त्वमपचारान्तरेषु च ॥" इति ( च० चि० ३ अ० ) २ । ननु सन्तापस्तु स्वाभाविक, सन्तापवाने च सर्वदेहेति चेत्, सत्यम् । स्वाभाविक-सन्तापस्य सीमातिक्रमोऽत्र अभिप्रेत । स्वाभाविकसन्तापश्च नव्यपरीक्षया तापमानयन्त्रस्य ९७ अंशादारभ्य ९८ ॥ अंशपर्यन्तो दृश्यते बलमात्राविभेदात् ॥ तदूर्ध्वं ज्वरसन्तापः । कस्यचित्, स्वभावेन हीनसन्तापस्य ९८ अंशादूर्ध्वं देहेन्द्रियमनस्तापलक्षणो ज्वरो भवत्येव । ३ । तथाचायुर्वेदे—"पाकलः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञश्च मानवानां ज्वरो मतः । अजावीनां प्रलापाख्यः करभे चालसी भवेत् । हारिद्रो महिषाणान्तु मृगरोगो मृगेषु च । पक्षिणामभिघातस्तु मत्स्ये चिन्द्रकटो मतः । पक्षपातः पतङ्गानां व्यालिष्टवधिकसंज्ञकः' इत्यादि । अन्यच्च 'जलस्य नीलिका भूमेरूषरो वृक्षस्य कोटरः" इत्यादि ।

[ अथ निजज्वराः ]

( ज्वरनिदानम् )

मिथ्याहारविहारादि निजस्यायतनं स्मृतम् ।
आगन्तोर्जलवाय्वादि-वाहितं प्रायशो विषम् ॥ २ ॥

(ज्वरसम्प्राप्तिः )

संसृष्टाः सन्निपतिताः पृथग् वा कुपिता मलाः ।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च ॥ ३ ॥

---

पुनरुच्यते । प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च । पुनः पञ्चविधो दृष्टो दोषकालबलाबलात् । सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ । पुनराश्रयभेदेन धातूनां सप्तधा मत भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः" इति ॥ १ ॥

अथ निजज्वराणा निदानमाह—मिथ्याहारेति । अभ्यस्तानमायतिसुखानामाहारविहाराणां वैपरीत्यं मिथ्यात्वम् । निजस्य निजज्वरस्य । जातावेकवचनम् आयतनं निदानम् । "निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः । निदानमाहुः पर्य्यायैः' —इत्युक्ते ॥ आगन्तुज्वरहेतुमाह—आगन्तोरिति । आगन्तोर्ज्वरस्य निदानन्तु —जलवायुभ्यां वाहितं विषं जीवाण्वादिनिष्ठमन्यविधं वा प्रायशः । प्रायश इत्युक्तेः अभिघातादीनामपि ग्रहणम् ।

ननु श्रूयते "दक्षापमानसंक्रुद्धरुद्रनिःश्वासः" एव ज्वरस्याद्यो हेतुरिति, स कथं नोक्तः ? उच्यते, अस्माकं खल्विह लौकिकैरिव हेतुभिः प्रयोजन नालौकिकैः, तेन तृप्यन्तु पुराणपरायणाः पौराणिकया वार्त्तयेति तादृश निमित्तं नोक्तम् केचित्त्वाहुः --'क्रोधात् पित्त'मिति चरकीयवचनेन सर्वज्वरेषु पित्ताविरोधिनी क्रिया कार्य्येत्यनेन सूच्यते--इति । उपन्यस्यन्ति चेह वाग्भटवचनं,—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना । तस्मात् पित्ताविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्"—इति । अन्ये तु रुद्रकोपसम्भूतत्वाज् ज्वरस्य देवत्वं मूर्त्तत्वञ्च कल्पयन्तः पूजनमप्युपदिशन्ति । अपरे तु सूक्ष्मदृशः समादधुः—दक्षो हि भगवान् वायुस्तस्यापमानो वैषम्यापादकं कर्म्म, तेन संक्रुद्धो रुद्रः पाचकाग्निस्तस्य निःश्वासो वहिर्निःक्षेपस्तत्सम्भवो ज्वर इत्यभिसन्धि प्राचामिति ॥२ ॥

अथ निजज्वराणा सम्प्राप्तिमाह चरकवचनै.—संसृष्टाः—इति ( च० चि० ८ अ० ) । मला दोषा वातपित्तकफाः । संसृष्टाः द्विर्द्विरवस्थिताः यथा —वातश्लेष्माणौ पित्तश्लेष्माणौ वातपित्ते चेति । सन्निपतिताः, त्रयो दोषा युगपत् तारतम्यप्रकारभेदैर्मिलिताः । पृथगेकैकशो वा, कुपिताः क्रुद्धाः सन्तः । बहुवचन-

( वातज्वरलिङ्गानि )

वेपथुर्विषमो वेगः कण्ठोष्ठमुखशोषणम्।
निद्रानाशः क्षुतः स्तम्भो गात्राणां रौक्ष्यमेव च ॥ ९ ॥
शिरो-हृद्-गात्ररुग्वक्त्र-वैरस्यं बद्धविट्कता।
जृम्भाऽऽध्मानं तथा शूलं भवत्यनिलजे ज्वरे ॥ १० ॥

( पित्तज्वरलिङ्गानि )

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः।
कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ ११ ॥
प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ १२ ॥

---

अथ विशिष्टपूर्वरूपमाह विशेषादिति। वाताधिक्ये जृम्भाधिक्य, पित्ताधिक्ये नेत्रदाहाधिक्यं, कफाधिक्येऽन्नस्यानभिनन्दन विशेषेणेति स्पष्टम्। एवं द्वन्द्वजे ज्वरे उभयविधयोः पूर्वरूपयो र्युगपदाधिक्यं सन्निपातज्वरे च त्रिविधानामाधिक्यमुन्नेयम्, तदुक्तं सुश्रुते "सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे। द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदु."—इति ( सु० उ० ३९ अ० ) ॥ ६ - ८ ॥

अथ सामान्यतो वातज्वरादीना लिङ्गान्याह सुश्रुतवचनै. वेपथुरित्यादिभिः—( सु० उत्तर० ३९ अ० )। वेपथु. कम्पः। क्षुतः क्षवस्य स्तम्भोऽनिर्गमनं, क्षवः छिक्का ( हांचोति वङ्गे प्रसिद्धा )। शूलाध्माने सामे वातज्वरे एव भवत, न निरामे ॥ ९। १० ॥

पित्तज्वरलिङ्गान्याह—वेगस्तीक्ष्ण इति। अतिसारः पित्तस्याधिक्यात् पित्तबहुल एव। वमिरपि प्राय पित्तस्यैव। कण्ठादीना पाक. सव्रणशोथता कचिद्व मुखादिक्षतं वा। स्वेदः ज्वरे सत्यपि अन्तरान्तरा उरोललाटादिषु घर्मनिर्गम। प्रलापोऽतितीव्रपित्तज्वरे वातसंसर्गादेव भवति, न सर्वत्र। कटुता तिक्तता, तदुक्तं—कटु स्यात् कटुतिक्तयोरिति। मूर्च्छा तमःप्रवेशः स्वल्पेनाप्यायासेन। मदः पूगशलाटुभक्षणेनेव मत्तता। भ्रमः चक्राकारभ्रमणेनेव। पीतनेत्रता ईषत्पीततेव नेत्रयोर्नतु सर्वथा कामला, कामलाया प्रायेण वर्च्चसि पित्ताऽभावदर्शनात्। तान्येतानि पित्तज्वरलिङ्गानि कचिदेव सर्वत्र सर्वाणि सम्भवन्ति, सम्भवन्ति च वातपित्तोल्बणसान्निपातिकतया प्रतीयन्ते परन्तत्र शीघ्रोपशमदर्शनात पित्तज्वर

( श्लेष्मज्वरलिङ्गानि )

गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता।
स्रोतोरोधो रुगल्पत्वं प्रसेको मधुरास्यता॥ १३॥
नात्युष्णगात्रता च्छर्दिरङ्गसादोऽविपाकिता।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता॥ १४॥

[ अथ द्वि त्रि दोषजज्वरलिङ्गानि ]

द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः।
सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे॥ १५॥

---

एवायमिति रुग्विनिश्चयः क्रियते। विशेषश्चात्र क्वचित् रक्तकोठादिदर्शनमपि भवति। क्वचिद् विषमज्वरः रोमान्तिका च एवंविधलक्षणे॰ सहचरितोपलभ्यते-- इत्यस्माकमनुभव॰॥ ११। १२॥

अथ कफज्वरलिङ्गान्याह—**गौरवमिति**। गौरवं गुरुगात्रता। शीतमीष-च्छीतानुभव', न तु विषमज्वरवदतिमात्रशीतम्। उत्क्लेशः उपस्थितवमित्वम्। स्रोतोरोधः स्वेदादिमार्गाणा बद्धप्रायता। आदिपदात् विण्मूत्रादिमार्गाणामपि प्रायः। क्वचित्तु कफज्वरे सामे मूत्राधिक्यमपि दृष्टम्। रुगल्पता रुजा शिरः-पीडादीनां मन्दता। प्रसेको लालास्रावः। अङ्गसादो गात्राणा शैथिल्यम्। प्रति-श्यायो नासादिस्रावः। अन्यत् स्पष्टम्॥ १३। १४॥

अथ द्वन्द्वजाना ज्वराणां लक्षणानि पृथगनुक्त्वा सुश्रुतवचनेनाह—**द्वयोर्द्वयो-रिति**। कैश्चित् वातलिङ्गै, कैश्चित् पित्तलिंगैश्च मिलितै र्वातपैत्तिकः— इत्येवमादिप्रकारेणेति भावः। सर्वलिङ्गसमावायः, सर्वेषां दोषत्रयोत्थाना लिङ्गाना सम्मेलनम्। तत्र च—केषाञ्चिदेव नियमेन लक्षणानां सम्भवो न सर्वेषा, क्वचित् तादृशलक्षणसमष्टीनां क्वचिच्च यदृच्छया मिलितानां दोषलक्षणाना दर्शनात्। अतएव चरकेण दिग्दर्शनार्थं द्वन्द्वजाना ज्वराणां लक्षणान्यभिधाय समासतावुक्तं—"तत्र यथोक्ताना ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनात् द्वान्द्विक-मन्यतमं ज्वरं सान्निपातिकं वा विद्यात्" इति ( च॰ नि॰ १अ॰ )। तदेतदखिल-निर्णायक लिङ्गसूत्रमिहोद्धृतेन सौश्रुतवचनेनाऽविसंवादि समस्तंव्यम्। या तु पुनरिह प्रकृतिसमसमवाय-विकृतिविषमसमवाययो र्महती वाचोयुक्तिरारचिता

[ अथ सान्निपातिकज्वरलिङ्गानि ]

निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गताऽरुचिः ।
तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा ॥ १६ ॥
पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता ।
रसना परुषा कृष्णा सन्धिमूर्द्धास्थिजा रुजाः ॥ १७ ॥
निर्भुग्नकलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ।
प्रलापः स्रोतसां पाकः कूजनं चेतनाच्युतिः ॥ १८ ॥
स्वेद-मूत्र-पुरीषाणामल्पशः सुचिरात् स्रुतिः ।
सर्वजे सर्वलिङ्गानि विशेषश्चात्र वक्ष्यते ॥ १९ ॥

---

विजयरक्षितेन, सा नेह घटते, असम्भवात् । प्रकृतिसमसमवाय विकृतिविषमसमवाययोरयं ह्यर्थस्तेनैव व्याख्यातः, यथा—"प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्य्यकारणभावसम्बन्धः प्रकृतिसमसमवायः, कारणानुरूपं कार्य्यमित्यर्थः, यथा—शुक्लतन्तुसमवायारब्धस्य पटस्य शुक्लत्वम् । विकृत्या हेतुभूतया विषमः कारणाननुरूपः समवायो विकृतिविषमसमवायः, यथा—हरिद्राचूर्णसंयोगे लौहित्यमिति ।" इह तु द्वन्द्वजज्वराणां चरकोक्तलक्षणसमष्टिषु नैकमपि तादृशं लिङ्गं पश्यामो यदारम्भकदोषद्वयमतिक्रम्य हरिद्राचूर्णसंयोगे लौहित्यवद् वैलक्षण्येन वर्तते, तत् कुतो विकृतिविषमसमवायारब्धता ? न च केषाञ्चिदेव लिङ्गानां नियमेन दर्शनम्, चरकोक्तदिशैव प्रत्यक्षतश्चानियमस्यैव भूयो दर्शनात् । तस्मात् महर्षिजनोक्तलिङ्गसूत्रस्मरणेनैव पुष्कलफलसिद्धे किमनेनाऽस्थानप्रयुक्तेन वाग्विस्तरेण । चरकोक्तलक्षणसमष्ट्यस्तु दिग्दर्शनार्थमुक्ता बोद्धव्याः । प्रकृतिसमसमवाय-विकृतिविषमसमवाययोः प्रसङ्गस्तु चरकीयविमाने भेषजपरिकल्पनाप्रसङ्गे प्रतिपादितस्तत्रैव सङ्गच्छते, नेह तावदकाण्डे । दोषदूष्यसंमूर्च्छनविशेषाददृष्टदेशकालादिसंयोगतश्च यद् रोगाणामानन्त्यं तत्तु प्रतिपादितमेवास्माभिः ॥ १५ ॥'

अथ द्व्युल्बणत्वादिभेदेन त्रयोदशविधेषु दोषसंमूर्च्छनादिविशेषादसंख्यविधेषु वा सन्निपातेषु प्रायेण सर्वत्र भाविनां लिङ्गानां समुच्चयं सामान्येनादौ सूचयति सौश्रुतसन्दर्भेण—**निद्रानाश** इति (सु० उत्तर० ३९ अ०) । निद्रानाशः—अनिद्रता-

## अभिन्यासज्वरः ।

( Severe Toxaemic Septicaemia )

नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतस्वरः ।
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥ २० ॥
सास्रो निर्भुग्नहृदयो भक्तद्वेषी हतप्रभः
श्वसन् निपतितः शेते प्रलापोपद्रवायुतः ॥ २१ ॥
तमभिन्यासमित्याहु-र्हतौजसमथापरे ।
सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥ २२ ॥

---

ऽल्पनिद्रता वा । भ्रमश्चकालढस्यैवानुभव. । तन्द्रा अनिद्रितस्यापि निद्रितवद्भावः । सुप्ताङ्गता मक्षिकादिस्पर्शेऽपि गात्राणामनुभवमन्दता, नतु सर्वथा स्पर्शाज्ञता । मोहो मूर्च्छितवद्भावः कचिन्मूर्च्छाऽपि । स्तम्भः स्तब्धताऽङ्गानाम् । हृदि व्यथेति उरसि व्यथा नतु हृद्यन्ते । प्रलापोऽसम्बद्धभाषणम् । स्रोतसां मुखनासादिरन्ध्राणां पाकः क्षतप्रायता, कचित् सृकण्यादौ पिडकानिर्गमश्च । कूजनं कण्ठे कपोतरुत-वद्ध्वनिः । चेतनाच्युतिः संज्ञानाशः । मूर्च्छा तु क्षणमात्रस्थायिनी, चेतनाच्युतिस्तु दीर्घकालं संज्ञाया अभावोऽल्पता वा । स्वेदादीनां सुचिरात् स्रुतिनिर्गमः । तान्येतानि लिङ्गानि सामान्यात् सर्वजे सान्निपातिकज्वरे सान्निपातिकज्वरजाति-ष्विति भावः । जातावेकवचनम् । विशेषश्चात्र वक्ष्यते, अभिन्यासलक्षणादौ । त्रयोदशविधानां सान्निपातिकज्वराणां लक्षणानि तु चरकादौ द्रष्टव्यानि, विस्तर-भिया मूले नोक्तानि । आचार्य्यमाधवकरोक्त. - "क्षणे दाह. क्षणे शीतम्" इत्यादि लक्षणो ज्वरस्तु समत्रिदोषसान्निपातिको दुर्लभप्रायः । भालुकिभावमिश्राद्युक्ता विधु-फल्गु मर्करी-विस्फुरक-शीघ्रकारि-कण्फणादि सज्ञाः सान्निपातिकज्वरा अपि तद्भेदाः साम्प्रत प्रविरला एवेति नोक्ताः ॥ १६ - १९ ॥

अथेदानीमपि प्रसिद्धं घोरतमं सान्निपातिकज्वरविशेषमभिन्यासं नामाऽह सौश्रुतवचनेन – **नात्युष्णेति** । ( सुश्रुत० उत्तर० ३९ अ० ) । नात्युष्णशीत साधारणाङ्गस्पर्शः । अल्पसंज्ञः किञ्चिदिव चेतनावान् । भ्रान्तप्रेक्षी उन्मत्त-वदस्थिरमूढदृष्टिः । सास्रः किञ्चिदश्रुपातशील. । निर्भुग्नहृदयः मूढचित्तः । भक्तद्वेषी किञ्चिदपि अन्नादिकमनिच्छ. । श्वसन् द्रुतश्वासशीलः । निपतितः शेते, काष्ठवदचेष्टमानस्तिष्ठति । प्रलापोपद्रवायुत', सर्वथा वाक्शक्तेर्लोपात्

( सन्निपातज्वरेषु काल-मर्यादा )

वातपित्तकफैः सप्त-दश-द्वादशवासरान् ।
प्रायोऽनुयाति मर्य्यादां मोक्षाय च वधाय च ॥ २३ ॥
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ।
द्विगुणा सप्तमी चैव नवम्येकादशी तथा ॥ २४ ॥

( सन्निपातज्वरान्तेभाविन उपद्रवा. )

बाधिर्य्यमङ्गवैकल्यमुन्मादो मूकताऽन्धता ।
क्वचित् स्युः सन्निपातान्ते एकशो वा द्विशोऽपि वा ॥ २५ ॥

---

लुप्तप्रायत्वाद् वा प्रलापोपद्रवो नैव भवति, भवति वा स्तोकेन । न तु प्रलापोपद्रवेण आयुतः अत्यर्थंयुत इति डल्वनवद् व्याख्येयम् , असम्भवात् । तं सन्निपातविशेष केचिदभिन्यासमपरे हतौजसमन्ये कृच्छ्रसन्निपाताख्यं विदुरिति संज्ञात्रयेण व्यवहारः प्राचाम् ॥ २० —२२ ॥

अथ सन्निपातज्वरमर्य्यादामाह वाग्भटीयवचनेन **वातपित्तेत्यादि**— ( अष्टाङ्गहृ० १ अ० ) । वातोल्वणत्वे सप्ताह, पित्तोल्वणत्वे दशाह, कफोल्वणत्वे द्वादशाहमिति क्रमः । प्राय इत्युक्तेः क्वचिदन्यथाऽपि मर्य्यादा भवति । मोक्षाय च वधाय चेति दोषपाके मोक्षो धातुपाके तु वधो मर्य्यादान्ते बोद्धव्यः । तन्त्रान्तरेऽप्युक्तम्—"पित्तकफानिलवृद्ध्या दशदिवस-द्वादशाह-सप्ताहान् । हन्ति विमुञ्चति वाऽशु त्रिदोषजो धातुमलपाकात् ॥" तदेतदग्निवेशमतम् हारीतमते तु द्विगुणेत्यादि मर्यादाचतुष्टयम् । द्विगुणा सप्तमी चतुर्द्दशी, सप्तम्याश्च ग्रहणं चकारेण । एवञ्च सप्तम नवम-दशमैकादश-द्वादश-चतुर्द्दशदिनानि, अर्थात् प्रायः समग्रमेव द्वितीयसप्ताहं सर्वेषु सन्निपातज्वरेषु सङ्कटप्रायमाहुर्वृद्धाः । केचित्तु द्विगुणेति प्रत्येकशो योजयित्वा व्याचक्षते, तेन चतुर्द्दशाष्टादशद्वाविंशदिनानामपि लाभः । नन्वेवं चेत् कथं प्रायेण अष्टाविंशतिदिनैर्ज्वरमोक्षः, उच्यते—दोषबाहुल्यात् तत्र चतुर्द्दशद्वैगुण्य, प्रभावविशेषाद्वा । अत एव मूले प्राय इत्युक्तम् ॥ २३।२४॥

सन्निपातज्वरान्तेभाविन. काचित्कानुपद्रवानाह **बाधिर्य्य**मित्यादि । बाधिर्य्यं श्रवणशक्तिहानिः । अङ्गवैकल्यं कर-पादादीनां चेष्टाहानिः शोषश्च क्रमश' । उन्मादः उन्मत्तवत् चेष्टादय । मूकता वाक्शक्तिविलोप. गद्गदवाक्त्व वा । अन्धता दृष्टिशक्तिहानिः । एषाञ्चोपद्रवाणामल्पाधिक्येन एकशो द्विशो वा प्रादुर्भावः ॥ २५ ॥

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोथः सञ्जायते तस्मात् कश्चिदेव प्रमुच्यते ॥ २६ ॥

( सन्निपातज्वराणां साध्यासाध्यता )

दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २७ ॥

---

उपद्रवान्तरमाह काचित्कमेव **सन्निपाते**ति। साऽयं शोथः कर्णमूलिकाख्य-लालाग्रन्थौ क्वचित् क्षीणस्य दृश्यते, पच्यते च प्रायः, मुच्यतेऽपि कश्चित्तस्मात्। चिकित्साकौशलेन। एष च कर्णमूलशोथः कर्णमूलिकज्वरे वक्ष्यमाणे आदौ मध्ये वा जायमानात् कर्णमूलशोथात् सर्वथा भिन्न एव, तस्य सुखसाध्यत्वात्। अन्यत्रापि श्रूयते—'ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः। क्रमेण साध्यस्त्वथ कृच्छ्रसाध्यस्तथाऽप्यसाध्यः कथितो मुनीन्द्रैः॥"– इति। कर्ण-मूलशोथोद्भवकारणन्तु ज्वरकाले सम्यङ्मुखदन्तादिशोधनाभावात् तत्संलग्नाहार शेषोद्भूतविषाणां कर्णमूलिकग्रन्थौ संक्रमणमेव ज्ञेयम्। तेन ज्वरितस्य जिह्वादन्त-वेष्टादीनां सर्वदा सम्यक् शोधनमत्यावश्यकमिति स्मर्त्तव्यम्॥ २६ ॥

सन्निपातज्वराणा साध्यासाध्यतामाह चरकीयवचनेन—**दोषे** इति। इह दोषे दूषितमलमूत्रादौ मलभूते पित्ते श्लेष्मणि चेति व्याख्येयम्। विवद्धे अच्यवमाने। अग्नौ जरणशक्तौ। सर्वसम्पूर्णलक्षण इति सर्वाणि सम्पूर्णानि लिङ्गानि यत्र दृश्यन्ते तत्र प्रायेण असाध्यतेत्यभिप्राय.। स्पष्टमन्यत्।

ननु वातादीना परस्परविरुद्धगुणानां कथं सम्भूयसमुत्थानं, सम्भूयसमुत्थाने वा कथं न परस्परगुणोपघात इति चेदुच्यते। वायुर्हि योगवाहः यदुक्तं "योगवाहः परं वायुः संयोगादुभयार्थकृत्" इति, तेन वायुना न कस्य-चिद्विरोधः। अथ पित्तश्लेष्माणौ परस्परविरुद्धावपि स्वभावादेकत्रावस्थायिनौ, विकृतावस्थायां चैकत्र विकृतिलक्षणदर्शिनौ युगपद् भिन्नक्षणेषु वा दृश्येते भूयः। तद्यथा—तिक्तमधुरास्यता, आलस्य-मूर्च्छे, उत्क्लेद-वमने चेत्येवमादीनां द्वन्द्वाना युगपदेव सम्भवः, दाह-शैत्यादीना तु भिन्नक्षणेषु। तदुक्तं 'क्षणे दाहः क्षणे शीतम्" इत्यादि। तेन कार्य्ये न विरोधः पित्तश्लेष्मणोः। दोषाणामविरोधेन प्रवृत्तौ हेतुस्तु चरके यथा—'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहज-सात्म्यत्वाद् घोरं विषमहीनिव" इति। सहजसात्म्यत्वात् प्रकृतौ स्वाभाविक-साहचर्य्यात्। वस्तुतस्तु अचिन्त्यस्वभावादित्येव सुवचम्॥ २७ ॥

अथ आगन्तुज्वराः।

अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ २८ ॥
शस्त्र-लोष्ट्र-कशा-वह्नि-दंशाद्यैरभिघातजः।
प्रायस्तत्र रुजाशोफौ वायुना रक्तदूषणात् ॥ २९ ॥
काम-शोक-भय-क्रोधैरभिषक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ॥ ३० ॥

---

अथ आगन्तुज्वरानाह—**अभिघातेति**। अभिघातजः, अभिषङ्गजः, अभिचारजः, अभिशापजश्चेति चतुर्विधः समासादागन्तुज्वर इत्यभिप्रायः। तत्राद्यौ प्रायोदृष्टौ, अन्त्यौ तु विरलौ, इदानीं तपःप्रभावदौर्बल्यात्। अभिघाताभिषङ्ग-पदयोरर्थौ तु अनुपदमेव वक्ष्येते। अभिचारः श्येनयागादि मारणोच्चाटनकर्म्म। अभिशापः गुरु-विप्र-सिद्धादीनां कोपोत्पन्नमहिताशंसनम्। तच्चागन्तुज्वरं चतुर्विधमपि दोषकोपनं विशिष्टलक्षणञ्चाहुः। यदुक्तं—'कामशोकभयाद् वायुः, क्रोधात् पित्त''मित्यादि, ''कामाद् भ्रमोऽरुचिर्दाह'' इत्यादि च। एष दोषसम्पर्कः परस्तादुभावी न त्वारम्भक इति स्मर्तव्यम्, व्यथायाः एव पूर्वं सम्भवात्। यदुक्तं चरके—'ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः। हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः॥'' इति (च० नि० ३ अ०)। केवलाः व्यथामात्ररूपाः, हेत्वौषधैर्विशिष्टाः विलक्षणाः विशिष्टहेतुका विशिष्टोपक्रमाश्च—इत्यर्थः ॥ २८ ॥

अभिघातजज्वरमाह—**शस्त्रलोष्ट्रेति**। कशा चर्म्मादिमयी रज्जुः। वह्निः वह्निदाहः। दंशो विषाक्तजन्तुकृत। आदिशब्देन अध्वश्रम तटप्रपातादि। प्राय इति निर्द्देशो रक्तदूषणहेतुकरुजाशोफयोः श्रमज्वरादौ क्वचिदेव दर्शनात्। रक्तदूषणञ्च विषदिग्धशस्त्राभिघात-दुर्दग्धादिष्वेव भूम्ना दृश्यते, येन क्वचिद् वीसर्पापतानकादिप्रादुर्भावो मरणञ्च ॥ २९ ॥

अभिषङ्गज्वरमाह—**कामशोकेति** चरकीयसन्दर्भेण। अभिषक्तस्य अभिभूतस्य। यश्च भूताभिषङ्गज इति वचनभङ्ग्या तस्य गौणत्वं विरलत्वञ्च सूच्यते। इदानीन्तनास्तु भूतावेशं त्रासमात्रमाहु-र्मानसरोगविशेषं वा। वृद्धास्तावत् पिशाचादिग्रहावेशो भवत्येवेति मन्यन्ते, व्याचक्षते च ''न ते मनुष्यैः सह संविशन्ति न वा मनुष्यानथवा विशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषया-

विषवृक्षानिलस्पर्शात् तथाऽन्यैर्विषसम्भवैः ।
अभिषक्तस्य चाप्याहु-र्ज्वरमेकेऽभिषङ्गजम् ॥ ३१ ॥
ध्यानं निःश्वासबहुलं लिङ्गं कामज्वरे स्मृतम् ।
शोकजे बाष्पबहुलं त्रासप्रायं भयज्वरे ॥ ३२ ॥
शिरोरुगरुचिर्ध्यानं नेत्ररागश्च कोपजे ।
अभिशापाभिचाराभ्यां घोरो दाहादियुग् ज्वरः ॥ ३३ ॥

---

दपोह्या."—इति संशयच्छेदि सौश्रुतवचन दैवादिग्रहविषयम्, प्रतिसंस्कर्त्तुस्तथैवाभिप्रायदर्शनात् । वयन्तु सर्वत्र योज्यमिदं प्रतीमः ॥ ३० ॥

अथान्यमपि अभिषङ्गजज्वरमाह—**विषवृक्षेति** चरकवचनेनैव । विषवृक्ष-वनोपकण्ठे चरतस्तीव्रौषधिगन्धघ्राणादिजन्यो ज्वर ओषधिगन्धज उच्यते । तस्यैव प्रकारभेदो वृद्धसुश्रुते तृणपुष्पाख्यः श्रूयते । यथा[१]—"पुष्पेभ्यो गन्धरजसो तेजस्विभ्यो यदाऽनिलः"—इत्यादि । तथा अन्यैर्विषसम्भवैः विकृतपर्युषितमत्स्य-मांसादिभिरुपयुक्तैः सविषजीवाण्वादिभिश्च कृता ये ज्वरास्तेऽपि अभिषङ्गजाः इत्येके—इत्येकीयनिर्देशेऽपि परमतमप्रतिषिद्धमनुमतमेव चरकेण । एवञ्च ग्रन्थिकादयः केचन जीवाणुविषकृतज्वरा अप्यभिषङ्गजा एवेति स्पष्टम् । विषम-ज्वराणामपि अभिषङ्गजत्वमाहुरेव प्राञ्चः, यदुक्तं—"आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे"इति ( च० चि० ३ अ० ), "केचिद् भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्" इति च ( सु० उ० ३९ अ० ) । अत्र भूताभिषङ्गो जीवाणुकृतोऽभिषङ्ग—इति व्याचक्षीरन् नव्याः ॥ ३१ ॥

अथ अभिषङ्गजज्वराणां निमित्तान्यभिधाय लिङ्गानि दर्शयति चरकीयसन्दर्भेण **ध्यान**मिति । ध्यानमिष्टजनस्य । अन्ये त्वाहुः—"कामजे चित्तविभ्रंशस्तन्द्रा-ऽलस्यमभोजनम्" इति । शोकजे बाष्पबहुलमश्रुबहुलम्, कदाचिद् दुश्चिकित्स्यः-तिसारसहितमपीत्यस्मदनुभव., शास्त्रोक्तञ्चैतत्—"शोकोत्पन्नो दुश्चिकित्स्यो-ऽतिसार." इति । भयजे त्रास एवानिमित्तं बहुशः, कचित् प्रलाप-वेपथ्वादि च । कोपजे तु शिरोरुगादि । कचित्तु विनाऽपि ज्वर तत्तल्लिङ्गम् । ३२ ॥

**अभिशापेति ।** अभिशापाभिचारौ व्याख्यातौ । दाहादीत्यादिपदेन तृष्णामोहादेर्ग्रहणम् । घोर सुदुःसहः । वाग्भट. पुनराह—"तत्राभिचारिकै-

---

१ । एष पाठो वर्त्तमान सुश्रुते न दृश्यते ।

**विषान्मूर्च्छातिसारास्य-श्यावता-दाह-हृद्रुजाः ।**
**सामान्यतो, विशेषात्तु तथास्वं लक्षणैर्ज्वरः ॥ ३४ ॥**
**ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।**
**हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥ ३५ ॥**

---

मन्त्रैर्हूयमानस्य तप्यते। पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः। स-दाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः इति।" वस्तुतस्तु "वैविध्यादभिचारस्य शापस्य च तदात्मके। यथाकर्म्मप्रयोगेण लक्षणं स्यात् पृथग्विधम्"—इति चरकोक्तदिशा बहुधा सम्भवन्ति तल्लक्षणानीति तत्त्वम् ॥ ३३ ॥

विषाभिषङ्गजं ज्वरमाह सामान्यतो **विषादिति।** मूर्च्छा मत्तवद्भावः संज्ञालोपो वा। आस्यश्यावता पीताभश्याममुखच्छवि। दाहः सर्वगात्रेषु आमाशयादौ वा। हृद्रुजा हृत्प्रदेशे पीड़ा, हृद्यन्त्रस्य सदनञ्च। तदेतत् सामान्यतो नानाविधसाधारणं लिङ्गम्। विशेषात्तु यथास्वं, यस्य विषस्य यानि यानि लिङ्गानि तैस्तैर्युतो ज्वरो भवति। विषञ्च द्विविधं—स्थावरं जङ्गमञ्च। तत्र स्थावरं कन्दफलमूलत्वक्पत्रादिक्रियाभेदादनेकविधम्। जङ्गमञ्च पशु-पक्षि-सर्प कीटादिदृश्यप्राणिविषभेदाद् अदृश्यप्रायसूक्ष्मजीवाणुविषभेदाच्च नाना-प्रकारम्। अदृश्यक्रिमिविषयश्चास्माभिः प्रतिपादितचरः प्राचामुक्तिभिः समर्थित-पूर्वश्च विशिष्टनिदानव्याख्यायाम् ॥ ३४ ॥

अथ आगन्तुज्वराणां वैशिष्ट्यमाह चरकीयवचनेन **ते पूर्वमिति।** ( च० नि० ३ अ० ) ते पूर्वोक्ता आगन्तवो ज्वराः पूर्वमारम्भकाले केवलाः काम-क्रोधादिविषान्तहेतुमात्रकृताः, न तु दोषकृताः। पश्चात् समनन्तरकाले निजै-र्वातादिकृतैः रोगैर्व्यामिश्रलक्षणाः, पश्चाद्दोषप्रकोपाद्धेतोः वातादिकृतज्वरादीनां लक्षणैर्मिलितलक्षणाः। आपातदृष्ट्या हि प्रायस्तादृशा एव ते प्रतिभान्तीत्यभिप्रायः। हेत्वौषधविशिष्टाश्च, तथाऽपि हेतुभिर्निदानैरौषधैः क्रोधादिप्रशमनैर्विषादिनाशकै-श्चोपक्रमैर्विशिष्टा इतरविलक्षणा भवन्ति। ननु वातादिलक्षणसादृश्यात् वातादि-जन्या एव सन्तु ते रोगाः वातादिप्रशमनैरौषधैः सम्यगुपक्रम्याश्च, किं तर्हि विषादि-विशेषविज्ञानेन इति न भ्रमितव्यम्। आगन्तुविषादीनां प्रभाववैचित्र्यस्यावश्य-ज्ञेयत्वाद्। विचित्राणि हि तत्र तत्र लिङ्गानि, विचित्रप्रभावैर्भेषजादिभिः प्रशमनीयानि, तानि शिक्षस्व गुरुशुश्रूषया भूयोदर्शनेन चेति परमर्षीणामभि-सन्धिः ॥ ३५ ॥

[ अथ विषाभिषङ्गजा आगन्तुज्वराः ]

अथेदानीं प्रसिद्धा ये केचिदागन्तवो ज्वराः ।
नानाविधविषोत्थानास्तान् वक्ष्यामः सविस्तरम् ॥ ३६ ॥
विषञ्च तेषु प्रायेण भवेद् जीवाणुसम्भवम् ।
क्वचिदन्यविधं वाऽपि द्वि-त्रदोषप्रकोपणम् ॥ ३७ ॥
हेतुलिङ्गपृथक्त्वेऽपि सामान्यं तेष्विदं स्थितम् ।
विषं सर्वाशयान् प्राप्य कश्चित् कस्यापि पीड़येत् ॥ ३८ ॥
ततः श्वासश्च कासश्च मोहोऽतिसरणं वमिः ।
मूत्ररोधश्च हृत्सादः सन्धिशूलश्च कामला ॥ ३९ ॥
अन्ये चोपद्रवाः केऽपि प्रादुःषन्ति द्विशस्त्रिशः ।
विषस्वभाववैचित्र्यात् चेत्रवैचित्र्यतस्तथा ॥ ४० ॥

---

अथैवमागन्तुज्वराणां हेत्वौषधवैशिष्ट्यमभिधाय इदानीं प्रसिद्धान् विशिष्ट-जातीयान् विषाभिषङ्गज्वरानुपक्रमते—अथेदानीमिति। नानाविधविषाणि पूर्वोक्तस्थावरजङ्गमानि, तान्युत्थानानि हेतवो येषामिति नानाविधविषोत्थानाः। विषञ्चेति प्रायेण जीवाणुसम्भवं क्वचिदन्यविधं पार्थिवादि वा। द्वित्रदोष प्रकोपणं, द्वौ त्रयो वा परिमाणमेषामिति द्वित्राः, द्वित्राणां दोषाणां प्रकोपणम्—विषस्वभावाद्वा तदल्पाधिक्याद्वा क्वचिद् द्वि-दोषकोपनं क्वचिद्वा त्रिदोषकोपन-मित्यभिप्रायः। सर्वाशयान् आमाशय-पक्वाशय-वृक्क-वस्ति-यकृन्-प्लीह-फुसफुस-मस्तिष्कादीन्। आशयानित्युपलक्षणं, तेन त्वक्-सन्ध्यादीनामपि ग्रहणम्। कस्य-चिद् रोगिणः कश्चित् उक्ताशयानामन्यतममाशय पीडयेत् विशेषेणाभिभवेत्। अत्र एकवचनमतन्त्रं, तेन कदाचिद् द्वित्राणामाशयानां सर्वेषां वा युगपत् प्रदूषणं भवत्येव। आशयप्रदूषणलिङ्गान्याह तत इति। ततो हेतोः श्वासादयः अन्ये चोपद्रवा हिक्कादयः द्विशस्त्रिशश्च प्रादुःषन्ति प्रादुर्भवन्ति। तद्यथा--फुसफुसा-क्रमणे सति श्वासकासौ। मस्तिष्कदूषणे मोह तन्द्रा-प्रलापादयः। आमपक्वा-शयदूषणे वमिरतीसारश्च। वृक्क-वस्तिदूषणे मूत्ररोधो रक्तमूत्रता वा। हृद्यन्त्र-दूषणे तदवसन्नता तत्क्रियारोधश्च क्रमश.। सन्धिदूषणे सन्धिशोथ शूलादि।

( परिसंख्यानम् )

आन्त्रिको ग्रन्थिकश्चापि श्लेष्मकः सन्धिकस्तथा ।
यश्च श्वसनको नामाऽऽक्षेपको यश्च वक्ष्यते ॥ ४१ ॥

षड़ेते विषजा घोराः सर्वधातुप्रदूषणाः ।
ज्वराः स्युर्जानपदिकास्तथा क्वाचनिका अपि ॥ ४२ ॥

मसूरिकाद्या ये चान्ये भू-वायु-जलदोषतः ।
काले काले प्रवर्त्तन्ते तेऽपि ज्ञेयास्तथाविधाः ॥ ४३ ॥

दण्डकाख्यो ज्वरो दुःखस्तथाऽन्यः कर्णमूलिकः ।
द्वावेतौ स्वल्पविषजौ सुखसाध्यौ विदुर्बुधाः ।
संक्रामन्ति च सर्वेऽपि श्वसनस्पर्शनादिभिः ॥ ४४ ॥

---

यकृद्दूषणे यकृच्छूल-कामलादि । ननु कस्यचित् कोऽप्याशयः कथं दूष्यते इति शङ्कायां हेतुद्वयमाह—विषस्वभाववैचित्र्यात्, विषस्य आशयविशेषाक्रमणशीलत्वात्, क्षेत्रस्य रोगिशरीरस्य वैचित्र्यात् आशयविशेषदौर्बल्याच्चेति ॥ ३५।४० ॥

विषाभिषङ्गजानागन्तुज्वरान् साम्प्रतिकप्रसिद्ध्या नामभिः परिसंचष्टे—**आन्त्रिक** इति । जानपदिकाः[1] समग्रे जनपदे युगपत् प्रवर्त्तमानाः, क्वाचनिकाः[2] क्वचन क्वचन दृश्यमानाः । भू-वायु-जलदोषत इति चरके जनपदोद्ध्वंसनीये यथोक्त—"तेषां तथाविधान्तर्हितधर्म्मणामधर्म्मप्रधानानामपक्रान्तदेवताना-मृतवो व्यापद्यन्ते । तेनापोऽयथाकालं देवी वर्षति नवा वर्षति विकृतं वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, औषधयः स्वभावं परिहाय आपद्यन्ते विकृतिं, तत उद्ध्वंसन्ते जनपदाः स्पर्शाभ्यवहार्य्यदोषात् ।" इति ( चरक० वि० ३अ० ) । दण्डक कर्णमूलिकौ द्विदोषप्रकोपणौ प्रायो विषदौर्बल्यादिति चाग्रे वक्ष्यते । श्वसनस्पर्शनादिभिरित्यादिपदान्मलमूत्रादिभिरपि संक्रमो ज्ञेयः ॥ ४१—४४ ॥

---

१ । जानपदिका—एपिडेमिक (Epidemic) २ । क्वाचनिका—एण्डेमिक (Endemic)

## अथ आन्त्रकज्वरः ।

[ Enteric or Typhoid fever ]

( निदानम् )

अध्वोपवासक्लिष्टानां दुर्गन्धाभ्यर्णवासिनाम् ।
प्रायो मलादिसंसृष्टभक्ष्यपानाप्रयोगतः ॥ ४५ ॥
सर्वेष्वृतुषु भूम्ना तु ग्रीष्मे शरदि वार्षिके ।
आन्त्रिकाख्यो ज्वरः कृच्छ्रो दृश्यते घोरलक्षणः ॥ ४६ ॥
तस्य जीवाणवः केचिन्मलमूत्रादिसम्भवाः ।
विशिष्टं तु निदानं स्युः—

( सम्प्राप्तिः )

—अथाऽन्त्राश्रयिणश्च ते ।
रसं रक्तञ्च दोषांश्च कोपयन्त्यचिरादपि
क्षिण्वन्ति चान्तिमं भागं क्षुद्रान्त्राणां शनैः शनैः ॥ ४७।४८ ॥

---

अथ सामान्येन अन्त्राश्रयित्वादान्त्रिकाख्यस्य ज्वरस्य निदानमाह—अध्वेति । अध्वा मार्गः । अध्वादिक्लिष्टाना दीर्घपथश्रान्तानामुपवासकर्शितानाञ्च । प्रायःपदं पूर्वेण योजनीयम् । तेन अन्येषामपि भवतीति सूच्यते । ऋतुविशेषमाह—सर्वेष्विति । भूम्ना प्राचुर्य्येण । दुर्गन्धाभ्यर्णवासिनां दुर्गन्धसमीपे वासशीलानाम् । तान्येतानि सामान्यनिदानानीति विशेषणमुखेनोक्तानि । विशिष्टं तु निदानं सूचयति—मलादीति । हेतौ पञ्चम्यर्थे तसिः । कृच्छ्रः कष्टसाध्य. सान्निपातिकलिङ्गानां विशेषतो दर्शनात् । अथ विस्तरेण विशिष्टं निदानमुच्यते—तत्रेति । मलमूत्रादिसम्भवाः तद्रोगजुष्टानां मलमूत्रादिषु सम्भवन्तः । तत्प्रवेशक्रमश्च पानीयजलादिद्वारेण तल्लिहमक्षिकादीना खाद्यादिस्पर्शेन वा । एवञ्च अध्वोपवासादिसामान्यनिदानैर्विनाऽपि पानीयजलादिदोषाद् भवत्येवासौ ज्वर इति पर्य्यवस्यति ॥४५।४७॥

अथ जीवाणूना विकारित्व दर्शयति—अथान्त्रेति । अथ ते च जीवाणवो विशेषेणान्त्राश्रयिणो रसमन्नजं सार, रक्तं शोणितं, दोषाश्च वातादीन् अचिरादपि शीघ्रमेव कोपयन्ति । अन्त्राश्रयणञ्च यद्यपि सार्वत्रिक, तथाऽपि दारुणस्थले वृक्कफुस्फुसाद्यन्यशारीरयन्त्राणामपि तदाक्रमणं दृश्यते भूयः । उक्तपूर्वञ्च "विषं सर्वाशयान् प्राप्य कश्चित् कस्यापि दूषयेद्" इति । अन्त्राक्रमणप्रकारं पुनर्विशदयति—क्षिण्वन्तीति । क्षुद्रान्त्रणामन्तिम चरमं भागम् । क्वचिद् बृहदन्त्र-

ततोऽन्त्रक्षतसंवृद्धौ क्वचिद्रक्तस्य निःस्रवः।
भिन्नान्त्रताऽथवाऽसाध्येत्येष वैकृतनिश्चयः ॥ ४९ ॥

( पूर्वरूपम् )

शिरोरुगरुचिः सादो विड्विबन्धोऽरतिस्तमः।
स्फुटास्फुटं पूर्वलिङ्गं प्रायः स्यादान्त्रिके ज्वरे ॥ ५० ॥

( रूपम् )

तदेव सज्वरं रूपमष्टाहेन स्फुटीभवेत्।
ज्वरश्च वर्द्धते नित्यं क्रमारोहेण लक्षितः ॥ ५१ ॥
प्रायशो दृश्यते किञ्चित् प्लीहश्चाप्यभिवर्द्धनम्।
क्वचिच्च सम्भवत्यौ गात्रेष्वारक्तलक्ष्मणाम् ॥ ५२ ॥

---

स्यादिमभागश्चेति सान्निध्याद् बोध्यम्। क्षिण्वन्ति काष्ठं घुणकीटवद् भक्षयन्ति। शनैः शनैरिति क्रमेण रोगस्य द्वितीयसप्ताहात परमेव प्रायः—इत्यभिसन्धिः। ततश्च हेतोरन्त्रक्षतानां संवृद्धौ विशेषेण वृद्धौ सत्या क्वचिद् रक्तस्य निःस्रवः, दुर्जरखाद्यादिसम्भवकठिनमलादि-सम्पर्केण क्षतस्य भिन्नीभावादित्यभिसन्धिः। स च क्वचित्—न प्रायः। प्रायस्तु स्वत एव काले अन्त्रक्षतानां संरोहणादारोग्यसम्भवः। इह रक्तस्य निःस्रवो रक्तस्राव. पायुमार्गेण। अथवा भिन्नान्त्रता अन्त्रेषु च्छिद्र-सम्भवात्, तेन उदरगुहाभ्यन्तरत एव रक्तस्रावः। असाध्येति। सद्यः शस्त्र-कर्म्मणा कचित् साध्याऽपि कायचिकित्सकानामसाध्यैव सा प्रायः। वैकृतनिश्चयः आभ्यन्तरविकारनिर्णयः सम्प्राप्तिः ॥ ४८। ४९ ॥

आन्त्रिकज्वरपूर्वरूपमाह—शिरोरुगिति। सादोऽङ्गसदनम्। तमोऽन्ध-कारदर्शनम्। स्फुटास्फुटमिति कचित् पूर्वरूप स्फुट दृश्यते, क्वचिन्नापि दृश्यते, तेन सामान्यज्वरसन्देह एव भवति पूर्वम् ॥ ५० ॥

आन्त्रिकज्वरस्य रूपमाह तदेवेति। तदेव पूर्वोक्तं लक्षणषट्क ज्वर-सहितमष्टाहेन रूपं रूपाकारेण स्फुटीभवेत्, क्रमात् स्पष्टतर प्रतिभासेत। ज्वर-सन्तापवैशिष्ट्यमाह ज्वरश्चेति। क्रमारोहेण लक्षितः पूर्वपूर्वदिनात्, सोपानावलि-न्यायेन तरात्परेद्युः प्रातःसायंकालयोः क्रमादधिकाधिकसन्तापेन उपलक्षितः। क्रमारोहावरोहप्रकाराश्च प्रथमचित्रे दर्शिताः।

पश्चाहात् परतः प्रायः क्वचिन्नैव चिरेण वा।
चणमुद्गादियूषाभं साध्मानमतिसार्य्यते ॥ ५३ ॥
अथ द्वितीये सप्ताहे प्रवृद्धस्तिष्ठति ज्वरः।
तदा स्युररतिस्तन्द्रा मुखशोषः प्रमीलकः ॥ ५४ ॥
कासः प्रलापो दौर्वल्यमाध्मानञ्च विशेषतः।
जिह्वा च रक्तपर्य्यन्ता कर्कशा स्फुटितोपमा ॥ ५५ ॥
सन्तापोऽभ्यधिकश्चापि धमनी नातिचञ्चला।
सान्निपातिकलिङ्गानामन्येषाञ्चापि सम्भवः ॥ ५६ ॥

---

ज्वरस्य क्रमारोहणञ्च अष्टाहावधि दृश्यते कचित्ततः परमपि द्वित्राणि दिनानि। प्रायश प्लीहाभिवृद्धिरित्युक्तेः क्वचिन्नापि भवति। स्मर्त्तव्यञ्चात, पूर्वतो विषमज्वरात्तस्य प्लीहाभिवृद्धिर्नान्त्रिकज्वर निश्चयेन सूचयेदिति। ओरक्तलक्ष्मदर्शनञ्च प्रथमसप्ताहे गौरगात्रेषु स्पष्टं, श्यामाङ्गे तु न स्फुट प्राय. ॥ ५१।५२ ॥

**पश्चाहादिति।** क्वचिदतीसारो नैव भवति विलम्बेन वा भवति, यत्र तु भवति तत्र चणकादियूषवत् पीताभमतिसार्य्यते इति निर्णायकं लिङ्गम्। सत्यपि चातीसारे, असति च, आध्मानं तिष्ठतीत्ययमपि रोगप्रभाव एव। प्रमीलकः प्रमूढावस्था। रक्तपर्य्यन्ता मध्ये मलिना पर्य्यन्तेषु रक्ता। सन्तापोऽभ्यधिकः दैहिकः सन्तापः ( १०४ –१०५इतिवत् ) प्रवृद्ध एव तिष्ठति स्तोकेन परिवर्त्तमानः। मानसश्च सन्तापो युगपद् विशेषेण। धमनी नातिचञ्चला, ज्वरवेगाधिक्यादन्यज्वरेषु धमनी

( प्रथमचित्रम् )




[ आन्त्रिकज्वरे सन्तापस्य क्रमारोहावरोहादिप्रदर्शकं चित्रम्। ]

चित्रे ※ इति चिह्नाङ्कि ता रेखा स्वाभाविकसन्तापदर्शिका।

अथास्य दोषपाकेन नैरुज्ये सम्भविष्यति ।
प्रायस्तृतीये सप्ताहे क्वचित्तुर्य्येऽथवा पुनः ॥ ५७ ॥
ज्वरः सोपद्रवगणः क्रमेणैवाऽवरोहति ।
वैषम्यं वैति, मुञ्चेत्तु स द्वाविंशतिवासरैः ।
अष्टाविंशतिसंख्यैर्वा दिनैर्विज्वरता भवेत् ॥ ५८ ॥

---

यथा अतिचञ्चला भवति नेह तीव्रज्वरेऽपि तथा, ईषच्चञ्चला तु भवत्येव। अन्येषाञ्च सान्निपातिकलिङ्गाना शिरोलोठनेन्द्रियध्वंसादीनाञ्च सम्भवो दारुणस्थलेष्विति शेषः। तदा च आयुषो योगाद्वा चिकित्साकौशलाद्वा जीवत्यातुरः ॥ ५३।५६ ॥

**अथास्येत्यादि।** दोषाणा जीवाणुविषकोपिताना वातादीना पाकेन क्रमात् स्वभावप्राप्तया नैरुज्ये आरोग्ये सम्भविष्यति सम्पत्स्यमाने सति। एतेन धातुपाके प्राप्ते ज्वरावरोहणं न भवति, क्रमाद्द वर्द्धते च ज्वरः सर्वसम्पूर्णलक्षणो, म्रियते चातुर इति वोध्यम्। तुर्य्ये चतुर्थे। ज्वरावरोहणञ्च द्वेधा भवति, शनैः सोपानावलिन्यायेन ( द्रश्यतां १म चित्रम् ), वैषम्येण विषमगत्या वा। सर्वथा ज्वरमोक्षश्च प्रायशो द्वाविंशतिदिनैरष्टाविंशतिदिनैर्वा। क्वचित्तु द्वाचत्वारिंशद्दिवसैर्दिनैः।

( द्वितीयचित्रम् )



[ आन्त्रिकसन्निपाते क्षुद्रान्त्राभ्यन्तरस्थानि क्षतानि तद्रोगमृतस्य अन्त्रविपाटनेन दर्शितानि। ]

द्वाचत्वारिंशता घस्रैः कचिद्वा मुञ्चति ज्वरः ।
क्रमारोहावरोहाभ्यां पुनर्दर्शितलक्षणः ॥ ५९ ॥
दशाहात् परतः क्वापि दारुणो रक्तनिःस्रवः ।
सोऽतिकृच्छ्रो भवेज्जातु ततोऽप्यारोग्यसम्भवः ॥ ६० ॥
सन्निपातज्वरान्तोक्तं बाधिर्य्यादि च वैकृतम् ।
कस्यापि जायते, तच्च प्रायः शाम्यत्युपक्रमात् ॥ ६१ ॥

अथ ग्रन्थिकज्वरः ।

( Plague or Bubonic Fever )

( परिचयः )

प्रायो वंक्षणकक्षादिग्रन्थिशोफरुजाकरः ।
ग्रन्थिकाख्यो जनपदोद्ध्वंसी घोरतरो ज्वरः ॥ ६२ ॥
तुल्येऽपि हेतौ स क्वापि भृशं फुस्फुसदूषणात् ।
सद्यः शोणितनिःष्ठेव-श्वासकासैर्हरेदसून् ॥ ६३ ॥

---

तादृशस्थले अष्टाविंशतिदिनानन्तर, ज्वरस्य पुनरपि पूर्ववत् क्रमारोहावरोहाभ्यां प्रवृत्तिः । दशाहादिति दशाहादारभ्य द्वाचत्वारिंशद्दिनावधि । कचिदन्त्रक्षतेभ्यो दारुणः प्रवाहवदिव प्रवृत्तो रक्तनिःस्रवो भवति, तेन प्रायेण मरणम् । तदुच्यते—सोऽतिकृच्छ्र इति । कचिदारोग्यदर्शनं हि चिकित्साकौशलात्तत्रापि भवत्येव ॥ ५७।६० ॥

अन्यच्च बाधिर्य्यमूकतादि सन्निपातज्वरान्तेभावि वैकृतं यत् पूर्वमुक्तं तदिहापि दृश्यते इत्याह—सन्निपातेति । तच्च वैकृतं विकृतावस्था । उपक्रमात् चिकित्सया प्रायः शाम्यति अपयाति । कस्यचित् किञ्चित्तिष्ठति, नापि शाम्यति चेति प्रायःपदेन निर्देशः । इदञ्चाग्रेऽपि सर्वेषु तीव्रविषाभिषङ्गज्वरेषु योज्यम् ॥ ६१ ॥

अथ द्वितीय ग्रन्थिकाख्य विषाभिषङ्गजज्वरमाह—प्राय इति । वंक्षणं नाम ऊरूदरयोः सन्धिस्थानं, कक्षा तु बाहूरसो.सन्धि । वक्षणादिस्थानेषु च स्वाभाविकावस्थाना ग्रन्थयो गुञ्जानिम्बफलाद्याकारास्तेषु केषाञ्चित् शोफ. शूनता रुजा पीडा च, तयोः कर' सम्पादकः । आदिशब्देन ग्रीवाकफोणिजानुसन्धिष्वपि कचित् । प्राय इत्युक्तेः कचिद् विनाऽपि ग्रन्थिशोथं वक्ष्यमाणफुस्फुसादिदूषणमुखेन भयत्येवासौ

अथवा सर्वथा सर्वधातून् द्रागभिदूषयन्।
अग्निन्यासंसमैर्लिङ्गैः सोऽग्रन्थिमपि मारयेत्॥ ६४॥

( निदानम )

निदानमत्र सामान्यं संकुलावसथादिकम्।
विशिष्टं तु विषं रक्तचरं जीवाणुसम्भवम्॥ ६५॥

---

ज्वर इति सूच्यते। ग्रन्थिकसंज्ञा च प्रायोभाविप्रधानलिङ्गनिबन्धना, प्राधान्येन हि व्यपदेशा भवन्तीति न्यायात्। तेन अग्रन्थिकेऽपि ग्रन्थिकसंज्ञा न विरुध्यते, तुल्यहेतुत्वात्। अत एव काचित्क विशिष्टप्रकारभेदद्वयमाह– तुल्येऽपि हेताविति। क्वापि–नतु प्रायः। भृशं फुस्फुसदूषणाद् युगपदुभयोः फुस्फुसयोर्विषसंक्रमात्। अथास्य फुस्फुसाक्रामिणो ग्रन्थिकज्वरस्य लिङ्गान्याह प्रथमत एव सूचीकटाहन्यायेन —सद्य इति। शोणितनिष्ठेवः श्वासः कासश्चेति लिङ्गत्रयं प्रधानं, तैर्लिङ्गैरुपलक्षितस्य रोगिणः असून् सद्यो हरेदेष ज्वरः। सद्यः तस्मिन्नेव दिने क्वचिद्द्वित्रैर्दिनैर्वा। घोरतम चरमं प्रकारमाह--अथवेति। द्राग् झटिति। अग्रन्थिमपि किमुत सग्रन्थिम्। ग्रन्थिशोथादर्शनञ्च विषस्य युगपत् सर्वदेहव्यापित्वेन ग्रन्थिष्ववरोधाभावात्। ग्रन्थिशोथो हि विषस्य ग्रन्थिषु अवरुद्धत्वादेव भवतीति शारीरविज्ञानविदः। एवञ्च त्रिप्रकारकोऽसौ ग्रन्थिकज्वरः सम्भवतीति स्मर्त्तव्यम्॥ ६२।६४॥

ग्रन्थिकज्वरनिदानमाह—**निदानमिति**। संकुलं बहुजनसंकुलम् आवसथादिकं गृहग्रामादिकम्। तदेतत सामान्यं निदानम्। विशिष्टं निदानमाह—विशिष्टं त्विति: ग्रन्थिकप्रदजीवाणुसमुत्थं हि तीव्रं विष रक्तचरं विशिष्टं निदानं, सर्वत्र ग्रन्थिकरोगिणा ग्रन्थिषु शोणितादौ च तद्दर्शनात्, परीक्षार्थं देशान्तरे संक्रामितैस्तैर्ग्रन्थिकरोगोत्पत्तेश्च।* ते च जीवाणवः स्पर्शात् करचरणा-

---

* अस्ति च पाश्चात्यनये परीक्षाचतुष्टय ( Koch's Law ) जीवाणुकारणतासाधनाय। तद्यथा— (१) तत्तद्रोगिषु तत्तज्जीवाणूनामवश्य दर्शनमिति प्रथमा परीक्षा। (२) तत्तज्जीवाणूनां रोगिशरीराद् बहिर्मासरसादौ सक्रमिताना पुनः पुनरभिवृद्धिरिति द्वितीया (३) तथा अभिवृद्धाना जीवाणूनां स्वस्थदेहेषु सक्रमणात् पुनस्तद्रोगोत्पत्तिरिति तृतीया। (४) तादृशरोगिदेहात् पुनस्तज्जीवाणूनां लाभः, पुनर्मासयूषादौ सक्रमणे तदभिवृद्धिश्चेति चतुर्थी। एतत्परीक्षाचतुष्टयमुत्तीर्णानामेव जीवाणूनां कारणता स्वीक्रियते पाश्चात्यै, नान्येषामित्यवधेयम्। उक्तार्थं स्मरणच्छलेन श्लोकद्वयेन यथा— सन्त्येव सति रोगे ते वर्द्धन्ते च रसादिषु। तथाऽभिवृद्धजीवाणुसंक्रमाद्रोगसम्भव॥ तद्रोगिदेहात्तेषां च पुनर्लाभोऽभिवृद्धियुक्। जीवाणुहेतुतासिद्धौ परीक्षेय प्रकाशिता॥

ते स्पर्शश्वसनादिभ्यः संक्रामन्ति नरान्नरम्।
भूम्ना तद्रोगजुष्टेभ्यो मूषिकेभ्यश्च संक्रमः॥ ६६॥

(रूपम्)

आदावेव ज्वरस्तीव्रः क्वचिन्मन्दोऽथवा पुनः।
भृशं स्रस्ताङ्गता तृष्णा प्रलापो मूर्च्छनं भ्रमः॥ ६७॥
निद्रानाशोऽरतिर्मोहो मत्तवत् कोऽपि ताम्यति।
शेते विसंज्ञो वाऽप्यन्यो यथाऽभिन्यासपीड़ितः॥ ६८॥
दग्धवत् कर्कशा जिह्वा धमनी शिथिला भृशम्।
ग्रन्थौ शोफः क्वचित् पूर्वं क्वचिन्मध्ये क्वचिच्चिरात्।
तोदः स्पर्शाऽसहत्वञ्च ग्रन्थौ पाकश्चिरादपि॥ ६९॥

---

दिषु अदृश्यक्षतादिद्वारेण, श्वासनात् तद्रोगिणो निःश्वासवायुग्रहणात्, आदिपदेन तद्भुक्तावशेषभक्षणादेश्च। भूम्ना प्राचुर्य्येण। मूषिकादिभ्यः संक्रमश्चैवं —तद्रोगाक्रान्ताश्च शतशो मूषिकास्तज्जीवाणूनामाकरभूता भूमिं दूषयन्ति। तथा च नग्नपादविचारिणा स्फुटितचरणतलादिद्वारेण, तल्लिङ्गमक्षिकादिभिः खाद्यादिदूषणेन वा जीवाणूनां सक्रमः।

अथ मन्यसे—अग्निरोहिण्याख्यः प्राचीनाचार्य्यैरुक्तो रोगस्त्वदुक्तग्रन्थिकज्वराद्भिन्न एवेति किमनया नवीनकल्पनया, यदुक्तं—"कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः॥ सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्। तामग्निरोहिणीं विद्यादसाध्यां सर्वदोषजाम्॥"—इति। तत्र ब्रूमः—अग्निरोहिण्याख्यक्षुद्ररोगे स्फोटाना मांसदारणानां सम्भवः, सप्ताहादिना च मृत्युः। इह तु ग्रन्थिभिरुदीर्णैरपच्यमानैरेव सान्निपातिकज्वरवतः प्राय. शीघ्रतरं मरणं, ग्रन्थिपाके तु बहूनामारोग्यलाभ एव प्रायः—इति भेदः। वस्तुतस्तु अग्निरोहिण्येव कालान्तरेण ग्रन्थिकाख्ये ज्वरे विपरिणतेति सुवचनम्॥ ६५।६६

वैशेष्याभावात् पूर्वरूपमनुक्त्वा ग्रन्थिकज्वरस्य प्रायिकं रूपमाह—आदावेवेति। इति। सर्वत्र पूर्वं तीव्रो ज्वरो भवति, मन्दो वा भवति, क्वचित् कम्पादिपूर्वो वा भवति। ग्रन्थिशोफश्च क्वचित् प्रथमदिन एव दृश्यते, क्वचिद् रोगमध्ये, क्वचिदन्ते वा—इत्यनुपदं वक्ष्यति। स्रस्ताङ्गता शिथिलाङ्गता। मत्तवत् ताम्यति उच्चैः शब्दायते, उत्थाय वा धावति। धमनी अङ्गुष्ठमूलगा शिथिला कोमलस्पर्शा,

द्वित्रैर्वा पञ्चषैर्वाऽपि दशभिर्वा दिनैः क्वचित् ।
सद्यो वा म्रियते रोगी चिराद्वा कोऽपि सिध्यति ॥ ७० ॥

( उपद्रवाः )

मूत्रावरोधः कासश्च तथाऽतीसार उल्बणः ।
छर्दिश्च रक्तपित्तञ्च ग्रन्थिके स्युरुपद्रवाः ॥ ७१ ॥

(साध्यलक्षणम् )

ग्रन्थीनां शीघ्रपाकेन बाहूनां वा समुद्भवात् ।
जरन् वा बालको वाऽपि रोगी जीवेत् कथञ्चन ॥ ७२ ॥

( अरिष्टलक्षणम् )

शीघ्रमिन्द्रियनाशेन सद्यः संज्ञाक्षयेण वा ।
अतीसारेण वाऽक्रान्तो ग्रन्थिरोगी न जीवति ॥ ७३ ॥

---

द्रुता विशेषेण चञ्चला। तोदः सूचीवेधवत् पीडा। स्पर्शाऽसहत्वं स्पर्शमात्रेण तीव्रवेदनाविशेषः। तच्चेह विशिष्टं भेदकं लिङ्गमिति स्मर्त्तव्यम्। यत्र तु ग्रन्थौ पाकस्तत्र प्रायेण रोगी जीवतीति विशेषः। द्वित्रैः, द्वौ त्रयो वा परिमाणमेषामिति द्वित्राः, तैः। पञ्चषैः पञ्च षड् वा परिमाणमेषामिति पञ्चषाः, तैः। समासान्तविधेश्च्। दशभिर्वा—इति प्रायिकः कालसीमानिर्देशः, तेन दशदिनानन्तरं जीवनाऽशा कर्त्तव्या॥ ६७—७० ॥

कांश्चित्कानुपद्रवानाह—**मूत्रावरोध** इति। कासः फुस्फुसाक्रमणात्, अतीसारोऽन्त्राणामाक्रमणात्, रक्तपित्तञ्च फुस्फुसाक्रमणादेव प्रायः क्वचिदन्यतोऽपि वा मार्गाद्रक्तप्रवृत्तिः। एतानि च सर्वाणि लिङ्गानि युगपत् प्रादुर्भूतानि सर्वथा असाध्यतामेव ख्यापयन्ति, प्रायस्तु नैवं सम्भवन्ति॥ ७१ ॥

साध्यलक्षणमाह—**ग्रन्थीना**मिति। बहुवचनमतन्त्रं, तेनैको ग्रन्थिः ग्रन्थिद्वयं बहवो वा ग्रन्थयो यदा शीघ्रं पच्यन्ते तदाऽपि साध्यता ज्ञेया। तत्र च रोगी यदि वृद्धो वा बालो वा, नतु युवा, तदाऽपि साध्यता सत्येव ग्रन्थिपाके। कथञ्चनेति कृच्छ्रसाध्यतैव दर्शिता आरोग्यमान्द्यञ्च। सुखसाध्यता त्वस्य नास्त्येव ॥ ७२ ॥

अरिष्टलक्षणान्याह—**शीघ्र**मिति। इन्द्रियनाशेन श्रवणादिशक्तिलोपेन। सद्यः, प्रथमे दिवसे द्वितीये वा संज्ञालोपेन। स्पष्टमन्यत्॥ ७३ ॥

अकृष्णं सकफं रक्तं ष्ठीवेद् यः श्वासपीडितः ।
आक्रान्त-फुस्फुसः सोऽयमसाध्यः सर्वथा स्मृतः ।
अग्रन्थिर्ग्रन्थिकोक्तैश्च लिङ्गैर्युक्तो यमातिथिः ॥७४॥

अथ श्लैष्मकज्वरः ।

( Influenza )

प्रादुःषन्तीह यत् प्रायः श्लेष्मजोपद्रवा भृशम् ।
क्वचिद् जनपदोद्ध्वंसी ज्वरोऽसौ श्लैष्मकः स्मृतः ॥७५॥

( निदानम् )

वायुवाहित-जीवाणू-विषं युगपदञ्जसा ।
लोकेषु प्रसृतं प्रायः श्वासमार्गेण तं ज्वरम् ॥ ७६ ॥
विदधाति क्वचिद् वाऽथ भुक्तमार्गेण संक्रमः ।
जनाज्जने च संक्रान्तिः श्वसनादि-निमित्ततः ॥ ७७ ॥

---

अथ द्वितीयमसाध्यलक्षणमाह—अकृष्णमिति । अकृष्णं सिन्दूरोज्ज्वलम् । वक्ष्यमाणे श्वसनकज्वरे तु कृष्णाभरक्तं ष्ठीवति, जीवति च यथार्होपक्रमेणेति विशेषः । सोऽयं द्वितीयः प्रकारभेदो ग्रन्थिकज्वरस्य । अग्रन्थिरिति तृतीयः । बहिर्दृश्यग्रन्थि-शोफोऽप्यन्यैर्लिङ्गैरुपद्रुतः, सोऽपि यमातिथिर्मुमूर्षुः । वस्तुतस्तु अभ्यन्तरत-स्तत्रापि ग्रन्थिशोफः मृतकपरीक्षायां प्रत्यक्षः ॥ ७४ ॥

अथ विषाभिषङ्गजं श्लैष्मकाख्यमागन्तुज्वरविशेषं वर्णयिष्यन् संज्ञाबीजमाह—**प्रादुःषन्तीति** । इहास्मिन् ज्वरे यत् यस्मात् श्लेष्मजोपद्रवा एव प्रायो भृशं प्रादुर्भवन्ति, ततः श्लैष्मकाख्योऽसौ ज्वरः । जनपदोद्ध्वंसीति कदाचित् महामारीरूपेणास्य प्रादुर्भावं * स्मारयति ॥ ७५ ॥

निदानमाह—**वायुवाहित** इति । युगपद् बहुषु जनेष्वेककालम्, अञ्जसा झटिति । तथाहि अधर्मवशाद् विशेषेण दूषिते वायुमण्डले अकस्मादेव तज्जीवाणूनां सृष्टिरभिवृद्धिर्वा, ततः श्वासमार्गेण तेषां सर्वतो लोकेषु प्रवर्त्तनात् तद्विष-

---

* अतिघोरमहामारीरूपेण हि प्रादुरभूदेष ज्वर ए १९१८-१९ वर्षयोः, येन समग्रेऽपि भूमण्डले लक्षशो मृता मनुजाः । पूर्वमपि वारत्रयमेव बभूवेयाहुरितिहासविदः ।

( सम्प्राप्तिः )

प्रायश्चास्य विकाराः स्युः श्वासयन्त्रे, क्वचित् पुनः ।
अन्नमार्गे समग्रेऽपि, क्वापि वा सर्वधातुषु ॥ ७८ ॥
कफवातोल्वणं तच्च सन्निपातमुदीरयत् ।
विषं धातून् विकुरुते स्तोकेनातिबलेन वा ॥ ७९ ॥

( रूपम् )

प्रतिश्यायः शिरःशूलं शीतकम्पौ च कुत्रचित् ।
अङ्गमर्दः कटीपृष्ठोरसां तीव्राश्च वेदनाः ॥ ८० ॥
कासो ज्वरोऽवसादश्च कार्श्यं चाल्पैर्दिनैर्भृशम् ।
अत्यर्थ-बलहानिश्च लिङ्गानि श्लेष्मके ज्वरे ॥ ८१ ॥
सामान्यतो, विशेषात्तु फुस्फुसाक्रमणे सति ।
सरक्तं ष्ठीवनं प्रायः प्रलापः श्वसनं तथा ॥ ८२ ॥

---

प्रसरश्चेत्यभिप्रायः । ननु अजीवाज्जीवसृष्टिः कथं सम्भवतीति चेत्, आद्यक्षणे स्वीकरणीयैव सा, अन्यथा युगपन्नानादेशेषु तत्प्रादुर्भावाऽसम्भवात् । अन्ये तु नाजीवाज्जीवसृष्टिरिति मन्वाना जीवाणूनां चिरसत्तां स्वीकुर्वन्ति, तन्मते आकस्मिकी अभिवृद्धिः । काले तु जनाज्जने संक्रान्तिरपि भवत्येव । भुक्तमार्गः मुखगलादिः ॥ ७६—७७ ॥

सम्प्राप्तिमाह—**प्रायश्चेति** । श्वासयन्त्रं सश्वासपथं फुस्फुसद्वयं, तत्र विकाराः व्रणशोथादयः कफपूर्णता च वायुनलिकानां, येन श्वसनाख्यज्वरलिङ्गैः सदृशानि क्वचिद् रक्तष्ठीवनादीन्यपि लिङ्गानि । अन्नमार्गे समग्रेऽपीनि—आमाशयपक्वाशययोः व्रणशोथवत् पीडा, ततो वमेरतीसारस्य च युगपदेकैकशो वा प्रवृत्तिरिति वक्ष्यते । अन्यत् स्पष्टम् । कफवातोल्वणमिति विशेषेण संप्राप्तिवर्णनम् । विकुरुते च धातून् स्तोकेन वा तीव्रबलेन वा—इति उभयथाऽपि सम्भवः ॥ ७८—७९ ॥

श्लेष्मकज्वरलिङ्गान्याह—**प्रतिश्याय इति** । प्रतिश्यायो नासामार्गेण जलवत् श्लेष्मनि स्रवो नेत्ररागादिसहितः । कुत्रचिदित्युक्तेः सर्वत्र शीतकम्पौ न भवतः । कार्श्यंश्चाल्पैर्दिनैरित्यादि । कृशताविशेषः, अत्यर्थबलहानिश्चेति विशिष्ट-लिङ्गद्वय पञ्चपैरेवाहोभिः सम्भवति । बलहानिश्च सर्वासामेव पेशीनां, विशेषेण

अथान्नमार्गे त्वाक्रान्ते वम्यतीसारयोर्द्वयोः।
एकस्य वा प्रवृत्तिः स्याच्छूलं क्वापि च कामला॥ ८३॥
अत्यर्थ-विष-योगेण सर्वधातुप्रदूषणात्।
अभिन्यासंसमं क्वापि रूपं तस्मान्न मुच्यते॥ ८४॥
नैरुज्यं स्वल्पदोषस्य शीघ्रं यद्यपि जायते।
बलहानिश्चिराय स्यात् कृच्छ्रा तु बहुदोषता॥ ८५॥

अथ सन्धिकज्वरः।

( Rheumatic Fever )

( परिचयः )

व्रणशोथ-रुजा-तोदैः सन्धीनापीडयन् भृशम्।
ज्वरो घोरः स-हृद्रोगः सन्धिको नाम कथ्यते॥ ८६॥

( निदान सम्प्राप्तिश्च )

हेमन्ते शिशिरे चर्त्तौ बाल्ये वा यौवनेऽपि वा।
निःशङ्क-शीत-वर्षादि-सेवयाऽपचिते बले॥ ८७॥

---

तु हृद्यन्त्रपेशीनामिति समर्त्तव्यम्। तेन क्वचिद् हृद्यन्त्रस्य अवसादान्मृत्युरपि। सामान्यत इति पूर्वेण योज्यम्। सरक्तमिति प्रायिकं, बहुधा नापि दृश्यते रक्तम्। उभयफुस्फुसाक्रमणञ्च श्लेष्मकज्वरे भूयो दृश्यते। अथान्नमार्ग इति। अन्नमार्गाक्रमणन्तु प्रायेण स्वल्पेषु रोगिषु दृश्यते। वम्यतीसारयोश्च विषभक्षणलिङ्गसादृश्यं स्पष्टं, कामला तु वम्यतीसारनिवृत्तौ दृश्यते, अपयाति च शीघ्रमेव सम्यगुपक्रमेण। कदाचित्तु सर्वाशयानामाक्रमणमपि दृश्यते युगपत्, तदा घोरो विकारः॥ ८०-८५॥

अथ सन्धिकज्वरस्य सञ्ज्ञाबीज परिचयमुखेनाह—व्रणशोथेत्यादि। व्रणशोथो विदह्यमानतः पाकाभिमुखावस्था, नतु पाकः। रुजाः आर्त्तयः। तोदः सूचीवेधवद् व्यथा। सन्धीन् अस्थिसन्धीन्। स-हृद्रोग इति प्रायः, कदाचिद्-हृद्रोगोऽपि भवत्येव सन्धिकः॥ ८६॥

निदानमाह—हेमन्त इत्यादि। हेमन्ते शीतारम्भे शिशिरे शीते च ऋतौ। बाल्ये कुमारावस्थायाम्। अतिशिशोस्तु वर्षद्वयादर्वाग् न भवति सन्धिक इति केचित्।

विषं जीवाणुसम्भूतं धातुषु प्रसृतं गलात्।
वातपित्तोल्वणं देहे सन्निपातमुदीरयेत्॥ ८८॥
ततश्च परितः सन्धीन् व्रणशोथोऽतिदारुणः।
अन्तःसन्धिवलासश्च बर्द्धमानो विदह्यते॥ ८९॥
अभितो हृदयं प्रायः सञ्चयोऽपां कलापुटे।
हृन्मध्ये हृत्कपाटे वा विकारा व्रणशोथजाः॥ ९०॥
फुस्फुसच्छदशोथोऽपि क्वचित् सव्ये प्रजायते।
फुस्फुसाक्रमणं वाऽपि श्वासकासादिलक्षणम्॥ ९१॥

रूपम्)

ज्वरः साधारणः पूर्वं सन्धिशोथस्ततः क्रमात्।
भृशं स्वेदो रुजास्तीव्रा मूत्राल्पत्वं हृदि व्यथा॥ ९२॥

---

वले अपचिते हीने। गलादिति कण्ठमार्गमाश्रित्य विशेषतश्च कण्ठशालूकाभ्या मिति केचित्। सम्प्राप्तिमाह—वातपित्तोल्वणमित्यादि। इदञ्च व्रणशोथ-तोद-भेदादिभिरनुमेयम्। त्रिदोषलिङ्गानि च भूयस्येव दृश्यन्ते। अन्तःसन्धि सन्धीनामन्तः। वलास श्लेष्मा इह श्लेषकाख्यः, स च व्रणशोथादेव हेतोर्वर्द्धमानो विदह्यते परिमाणाधिकः सन् पच्यमान इव भवति नतु पच्यते। सन्धीन् परित इति "अभित.परितःसमयानिकषाहाप्रतियोगेऽपि"—इति द्वितीया॥ ८७—८९॥

अथ सन्धिकज्वरे प्रायोभाविनो हृदयन्त्रविकारानाह—अभित इति। हृदयमभितः स्थिते कलापुटे हृदयच्छदाख्ये अपां जलस्य व्रणशोथोद्भवलसीकारूपस्य सञ्चयः। ततश्च हेतोर्हृदि व्यथा वक्ष्यमाणा, प्रायः हृदयन्त्रस्य स्वस्थानच्युतिश्च। अथवा हृन्मध्ये हृत्पेश्यां हृदन्तर्गुहावरण्या कलायाञ्च, हृत्कपाटे हृत्प्रकोष्ठानां द्वारभूतेषु तनुकलावृतमांसपत्रकेषु वा (जातावेकवचनम्) व्रणशोथजा विकाराः सङ्कोच-संहननाङ्कुरोद्गमादयः। किञ्च फुस्फुसच्छदस्य तदाख्यकलाया अपि क्वचित् शोथ, स च प्रायः सव्ये वामे पार्श्वे दृश्यते हृदयन्त्रसान्निध्यात्। क्वचित् फुस्फुसाक्रमणं वा, व्रणशोथस्य तत्रापि प्रसरणात्॥ ९०—९१॥

सन्धिकज्वररूपमाह—ज्वर इति। साधारणः नातितीव्रः सामान्यलक्षणश्च। ततः क्रमात् द्वित्रिचतुर्दिनैः सन्धिशोथः पूर्वोक्तप्रकारः। भृश स्वेद इति विशिष्टं लिङ्गं स्मर्त्तव्यम्। इति व्यथा पूर्वोक्तविकारारम्भात् प्रायेण॥ ९२॥

सन्निपातिक-लिङ्गानां केषाञ्चन च दर्शनम्।
ज्वरोऽतिघोरः कुत्रापि प्राणहृत् सोऽनुपक्रमात्। ॥ ६३ ॥
यूनां सन्धिषु वालानां हृदये च विशेषतः।
विकाराः प्रायशो दृश्याः सन्धिकाख्ये ज्वरे ध्रुवम् ॥६४॥
अथोपक्रम-नैपुण्याल्लाघवाद्वा विषस्य चेत्।
जीवति छिन्नसप्ताहान् हृद्रोगी प्रायशस्तु सः ॥ ६५ ॥
पुनरावर्त्तते चापि केषाञ्चित् सन्धिको ज्वरः।
सन्धिशोथादियुक् तस्मान् मन्दमारोग्यमश्नुते ॥ ६६ ॥
हृद्रोगादायतौ दुःखं प्रायः सर्वस्य जायते।
स श्रम-श्वास-शोथाद्यैः क्रमात् सीदन् जहात्यसून् ॥६७॥

---

सन्निपातिक-लिङ्गानां श्वासकासप्रलापादीनां केषाञ्चन नतु सर्वेषाम्। ज्वरोऽतिघोर इति अतितीव्रसन्तापः ( १०६-१०७ डिग्रीमितः ) कुत्रापि नतु सर्वत्र। स च अनुपक्रमात् सुशीत-जलसेकावगाहादे-र्विना प्राणहृत् प्राणान्तकः ॥ ६३ ॥

अथ वर्णितानां विकाराणां प्रायोदृष्टं विशेषमाह—यूनामित्यादि। यूनां सन्धिषु वालानां तु विशेषतो हृदये हृदयन्त्रे विकारा भवति। ध्रुवं निश्चितम्। अत्र वर्षद्वयादूर्द्ध्वम् आषोडशवर्षाद् वालः, ततः परमात्रिंशतो युवेति ग्रन्थकर्त्तुरभिप्रायः। यद्यपि प्राचां ग्रन्थेषु अन्यथा बाल्य-यौवनयो-र्निर्देश, तथाऽपि इदानीन्तन जनायुर्दर्शनादेवं वयःप्रविभागो न दोषाय ॥ ६४ ॥

आरोग्यकालं कृच्छ्रसाध्यताञ्चाह अथेति। अथ चेद् यदि उपक्रम-नैपुण्यात् चिकित्साकौशलात्, विषस्य सन्धिकज्वरकरस्य जीवाणुविषस्य लाघवात् मात्रालघुत्वात्, रोगिणः स्वाभाविकवलापेक्षया वा विषस्य दुर्वलत्वाद् जीवति रोगी, तदा स प्रायशो हृद्रोगी तु भवत्येव ॥ ६५ ॥

सन्धिकज्वरस्य आरोग्योन्मुखावस्थायामपि पुनरावृत्तिशीलतामाह-पुनरिति। पुष्कलकारणं विनाऽपि पुनरावर्त्तनं रोगस्वभाव एव। तस्मात् पुनरावृत्तात् सन्धिकज्वरात्. मन्दं शनैः शनैः। एवञ्च कदाचिन्मास मासद्वयं वा विरुज्यते रोगी ॥६६॥

अथ हृद्रोगस्य परिणाममाह—हृद्रोगादिति। आयतौ उत्तरकाले प्रायः, कतिचिन्मासानन्तरं वर्षानन्तरं वा। श्रमजः श्वासः श्रमश्वास। सीदन् क्रमशो हीनवलो भवन् स रोगी असून् प्राणान् जहाति म्रियते ॥ ६७ ॥

## अथ श्वसनकज्वरः ।

( Pneumonia )

लाक्षारसाभं यः ष्ठीवेद् रक्तं श्वासज्वरार्दितः ।
स्त्यान-फुस्फुसमूलस्य तस्य श्वसनको ज्वरः ॥ ९८ ॥

( निदानम् )

समाच्छादन-हीनानां दुर्वलानां विशेषतः ।
दीनानां दूनचित्तानां शीतवर्षादि-बाधनात् ॥ ९९ ॥

---

अथ विषाभिषङ्गज्वरं श्वसनकं नाम परिचाययति—लाक्षारसेति । लाक्षारसाभं लाक्षारसवत् सकृष्णरक्तवर्णं, तदेतद् भेदकं लिङ्गम् । उज्वल-रक्तष्ठीविनस्तु पुंसो रक्तमुरःक्षतादिजनितं मन्तव्यं प्रायः । असाध्येषु ग्रन्थिकादि-सन्निपातविशेषेष्वपि उज्ज्वलरक्तमेव ष्ठीवति । श्वासज्वरार्दितः द्रुतश्वासेन ज्वरेण च विशेषेण पीड़ितः । तदेतत्त्रितयं युगपद् वर्त्तमानं सपद्येव श्वसनकाख्यं सन्निपातं ख्यापयति । यत्र तु कचिद् रक्तष्ठीवनं नापि विद्यते तत्रापि फुस्फुस-परीक्षया तन्मूलस्य स्त्यानताकृतः संहतीभावः परिज्ञायते । परीक्षा चेयमाकर्णनेन प्रतिघातोत्थ-शब्दश्रवणेन च क्रियते । तत्राऽकर्णने नाडीधमनवच्छब्दः[1] सूक्ष्म बुद्बुदोद्गमध्वनिश्च[2] फुस्फुसमूले श्रूयेते, अंगुल्या प्रतिघाते च पाषाणप्रतीघातोत्थ-वद् ध्वनिः । स च तत्रत्य वायुकोषाणामवरोधाद् व्रणशोथजः । श्वसनयन्त्राक्रमणाच्च श्वसनकसंज्ञा-निष्पत्तिः । सोऽयं ज्वरः किञ्चिदन्यविधलक्षणो[3] भावमिश्रेण तन्त्रान्तरात् कर्कटक नाम्ना समुद्धृतः । यथा – ‘इषुणेवाहतं पार्श्वं तुद्यते खन्यते हृदि । प्रमीलकः श्वासहिक्का वर्द्धते तु दिने दिने ॥ जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः । विसर्गं नाभिजानाति कूजेच्चापि कपोतवत् ॥ अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रौष्ठ-तालुकः । तन्द्रानिद्रार्तियोगार्त्तो हतवाङ् निहतद्युतिः ॥ न रतिं लभते नित्यं विपरीतानि चेच्छति । आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः ॥ एष कर्कटको नाम्ना सन्निपातः सुदारुणः ।” इति ( भाव प्र० ) । यद्यपि रक्तष्ठीवनं श्वसनके ज्वरे कचिन्नापि दृश्यते, तथाऽपि प्रायिकलक्षणमिदं बालानामपि परिचयाय पर्य्याप्तमित्यभिहितमादित एव ॥ ९८ ॥

---

१ । Tubular Breathing २ । Fine Crepitations, ३ । अन्यविधलक्षण ४ तत्र नियमेन हिक्कादिदर्शनात् ।

अभिघातात् क्वचित् पूतिगन्धयोगेन कुत्रचित् ।
क्वचिद्वा व्याधिनाऽनेन पीड़ितस्याऽतिसङ्गमात् ॥१००॥
सर्वेष्वृतुषु भूम्ना तु वर्षासु शिशिरे मधौ ।
ज्वरः प्रादुर्भवत्येष जीवाणुविष-सम्भवः ॥ १०१ ॥

( सम्प्राप्ति )

संहत्यासृङ् मूलतः फुस्फु सस्या-
ऽसव्ये पार्श्वे सव्यतो वा द्वयोर्वा ।
जिघांसन्ति श्वासयन्त्रं विषोत्था
दोषास्तस्माच्छ्वासकष्टं ज्वरश्च ॥ १०२ ॥

(पूर्वरूपम् )

पार्श्वार्त्तिः श्वासकासौ च क्वचित् कम्पोऽवसन्नता ।
प्राग्रूपमाहुर्निपुणाः प्रायः श्वसनके ज्वरे ॥ १०३ ॥

---

निदानमाह—समाच्छन्नेति । दूनचित्तानां शोकादिग्लानमनसाम् । भूम्ना प्राचुर्य्येण । शिशिरे शीतर्त्तौ, मधौ वसन्ते । अन्यत् स्पष्टम् ॥ ९९—१०१ ॥

अथ श्वसनकज्वरस्य सम्प्राप्तिमाह—संहत्येति । असव्ये दक्षिणे पार्श्वे सव्ये वामे वा पार्श्वे, उभयतो द्वयोर्वा पार्श्वयोः, फुस्फुसमूलतोऽसृगूरक्तं संहत्य उपलक्षणात् दुष्टशोणितं लसीका च स्त्यानीकृत्य । विषोत्थाः श्वासमार्गेषु लब्धप्रवेश-जीवाणुविष-प्रभाव-प्रकोपिता दोषा वातादयः श्वासयन्त्रं फुस्फुसं जिघांसन्ति हन्तुमिच्छन्ति, न तु नियमेन घ्नन्ति । ततः कारणात् श्वासकष्टादि-बहु-सन्निपातिक-लक्षण-समन्वितो ज्वरः श्वसनको नाम प्रवर्त्तते । प्रायेणादौ दक्षिणपार्श्व एव फुस्फुसस्य संहतीभावो भवतीति दक्षिणपार्श्वस्याऽऽदौ निर्देशः ॥ १०२ ॥

पूर्वरूपमाह —पार्श्वार्त्तिरिति । यस्मिन् फुस्फुसे व्रणशोथस्तत्रैवार्त्तिः फुस्फुसच्छदकलाया व्रणशोथस्य प्रसर्पणात् । ततश्चात्र क्वचिज्जलसञ्चयोऽपि । अन्यत् स्पष्टम् ॥ १०३ ॥

( रूपम् )

प्राक् प्रायः शीतमत्यर्थं ज्वरस्तीव्रोऽरुचिस्तृषा ।
पार्श्वशूलमथो कासः श्वासवृद्धिः क्रमेण च ॥ १०४ ॥
कासतः शोणितं श्यामं मुहुः सान्द्रं प्रवर्त्तते ।
श्वासतो नासिकापार्श्वौ स्फुर्ज्जतश्च निरन्तरम् ॥ १०५॥
स्वेदो ललाटे गात्राणि भृशं स्विद्यन्ति चानिशम् ।
गौरसर्षपवत् स्वेदपिड़कानाञ्च दर्शनम् ॥ १०६ ॥
दौर्व्वल्यं सदनं मोहः प्रलापः कण्ठकूजनम् ।
परुषा कर्कशा जिह्वा मलिना च भवेद् भृशम् ॥ १०७ ॥
धमनी युग्मतामेति कोमला स्थूलचञ्चला ।
यावन्न ज्वरमुक्तिः स्याद्—ज्वरमुक्तेरनन्तरम् ।
विशेषान्-मन्दतामेति रोगेऽस्मिन्निति निश्चयः ॥ १०८ ॥

---

रूपमाह **प्रागिति**—प्राय इत्युक्तेः क्वचित् शीत, नापि भवति। तीव्रज्वरादयस्तु भवन्त्येव। क्रमेण श्वासवृद्धिरिति यथा यथा फुस्फुसमूलमाक्रम्यतेऽधिकतरं दोषैस्तथा तथा द्रुतश्वासता भवतीत्यभिसन्धिः। कासतः पुरुषस्य श्यामं लाक्षारसाभ सान्द्रं वहल शोणितं मुहुर्वारं वारं प्रवर्त्तते। श्वासतः पुरुषस्य नासिकापार्श्वौ विशेषेण स्फूर्ज्जत' कम्पेते, तच्चेदमपर निश्चयप्रदं लिङ्गं स्मर्त्तव्यम्। अन्यत् स्पष्टम् ॥ १०४—१०७ ॥

धमनीपरीक्षामाह **धमनीति**—युग्मतामेति युग्मेन द्विर्द्विराहत्य[१] चलति प्रायः। कोमलादिपदानामर्था रोगपरीक्षाप्रकरणे वर्णिताः। एवंविधा च धमनी यावज्ज्वरनिमुक्तिर्न भवति सप्तमे अष्टमे नवमे वा दिने, तावदेव दृश्यते। ज्वरनिर्मुक्तौ तु विशेषान्-मन्दतामेति, स्वाभाविकगतेरपि मन्दतरगतिर्भवतीति विशेषः। अन्यत् स्पष्टम् ॥ १०८ ॥

---

१ Dicrotic Pulse

सप्तमे दिवसे प्रायश्चाष्टमे नवमेऽथवा।
अकस्माज्ज्वरनिर्मुक्तिः स्वेदप्राचुर्य्यमेव च ॥ १०९ ॥
प्राणा वा तत्र मुच्यन्ते रोगी वा तत्र मुच्यते।
मुच्यमानस्तु नैरुज्यं शीघ्रमेव समश्नुते ॥ ११० ॥

( साध्यासाध्यलक्षणम् )

एकतः फुस्फुसे दुष्टे ज्वरेऽतीव्रे स्थिते बले।
सम्यक् पादत्रये लब्धे मन्तव्या सुखसाध्यता ॥ १११ ॥
स्वेदो भृशं ज्वरस्तीव्रो वृद्धः क्षीणोऽथवातुरः।
पादत्रयस्य सम्पत्त्या स तु जीवेत् कदाचन ॥ ११२ ॥

( अरिष्टलक्षणम् )

द्वावेव फुस्फुसौ दुष्टौ समग्रो यस्य वैकतः।
नासाश्वासौ भृशं स्वेदो दुर्लभं तस्य जीवितम् ॥ ११३ ॥
मन्दं किञ्चित् प्रलपति स्वेदस्नातः प्रमुह्यति।
वेपते करपादश्च प्राणास्तस्यापि दुर्लभाः ॥ ११४ ॥

---

**सप्तमे** इति। यद्यपि सर्वसन्निपातानामिदं प्रायिकं लिङ्गं तथापि श्वसनकसन्निपातस्य विशेषतस्तथेति पुनरुक्तं, क्वचित् पुनरिह शनैरपि ज्वरमुक्तिः। स्वेदप्राचुर्य्यमिति। स्वेदप्राचुर्य्येण हिमाङ्गता क्वचिन्नाड़ीलोपश्च भवति, परं सम्यक्चिकित्सया जीवति रोगी बहुधा। प्राणा वेति सङ्कटामवस्थां दर्शयति। नैरुज्यमारोग्यम्। तच्च प्राय. पक्षेण मासेन वा भवति फुस्फुसस्य स्वाभाविकावस्था-प्राप्ते. ॥ १०९—११० ॥

साध्यासाध्यलक्षणान्याह—**एकत** इति। एकत. एकस्मिन्। फुस्फुसद्वये समाक्रान्ते त्वतिदु साध्यता। स्थिते बले इति—यदि वृथालङ्घनादिना बलक्षयो न जातस्तदैव। पादत्रये—भिषग्द्रव्याण्युपस्थातेति चिकित्सापादत्रये। दुःसाध्यतां दर्शयति—स्वेदो भृशमिति। आतुरो रोगी ॥ १११—११२ ॥

अथ अरिष्टलक्षणान्याह **द्वावेवेति**। द्वावेव, किंवा एकत. एकस्मिन् पार्श्वेऽपि यस्य समग्रः फुस्फुसो दुष्टो न तु मूलमात्रम्। नासाश्वासः—नासा-पुटयो. विस्फारविशेषप्रद. श्वास पूर्वोक्तरूप.। वेपते करपादमिति—हस्तपादकम्पनं

अतीसारेण वाऽऽक्रान्तो दुर्वारेण भवेद् यदि ।
क्षीणः श्वसनकेनार्त्तो दक्षिणाभिमुखो हि सः ॥ ११५ ॥

## अथ आक्षेपकज्वरः ।

[ Cerebro-spinal Fever ]

( परिचयः )

आक्षिप्यन्ते यतोऽङ्गानि सङ्कोचं यान्ति चाञ्जसा ।
घोरो ज्वरश्च संज्ञाहृत् सोऽयमाक्षेपको ज्वरः ॥ ११६ ॥

( निदानम् )

वसतां संकुले देशे रजोधूमाकुले चिरम् ।
दरिद्राणां भवेद् भूम्ना सोऽयं जीवाणुसम्भवः ॥ ११७ ॥

( सम्प्राप्तिः )

मस्तिष्कमूले परितः सुषुम्ना-
काण्डं च तच्छादिकलान्तराले ।
विषं क्रमात् पूयसमां लसीकां
संहत्य दोषानखिलान् प्रकोप्य ॥ ११८ ॥

---

किञ्चिन्मात्रचेष्टया अचेष्टया वा दृश्यमानमतिदौर्बल्यं व्यापयति । दक्षिणाभिमुखा—यमपुरीं गन्तुमुद्यतः ॥ ११३—११४ ॥

अथापरमभिपङ्गज्वरमाह—आक्षिप्यन्त इति । आ समन्तात् क्षिप्यन्ते सङ्कोचप्रसाराभ्यां प्रचाल्यन्ते । वस्तुतस्तु मुहुर्मुहुर्द्रुतसङ्कोचप्रसाराभ्या अन्तराऽन्तरा स्तब्धीभावेन च या विकृतचेष्टा, तस्याः पारिभाषिकी सज्ञा 'आक्षेपक' इति । उक्तञ्च—"मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृत."—इति ( सु० सू० १ अ० ) । तत्सहितत्वात् लक्षणया ज्वरोऽयमाक्षेपकसंज्ञः । स च विरलदृष्टोऽपीदानीं सुप्रसिद्धः । अञ्जसा झटिति । संकुले बहुजनाकुले । भूम्ना प्राचुर्य्येण । क्वचिद् धनवतामपि ॥ ११६ - ११७ ॥

सम्प्राप्तिमाह—मस्तिष्कमूल इति । द्वाभ्याम् । मस्तिष्कं नाम शिरोगुहाभ्यन्तरस्थं निखिल-सज्ञाचेष्टामूलं * यन्त्रमनेकदलप्रविभागाङ्कितं यत्

---

* दृश्यन्तां प्रत्यक्षशारीरोपोद्घातस्य ६२ पत्रे तन्त्रोद्धृतप्रमाणानि ।

चेष्टावहानामथ नाडिकाना-
मुत्तेजनादाक्षिपदङ्गकानि।
सङ्कोच्य शाखाश्च निहन्ति संज्ञा-
माक्षेपके दुर्लभजीवितस्य ॥ ११९ ॥

(रूपम्)

तीव्रा शिरोरुग् वमथुः शीतकम्पौ च जातुचित्।
ग्रीवास्तम्भः क्रमाच्छीर्षं पश्चादाकृष्यते बलात् ॥१२०॥
ज्वरश्च वर्द्धते नित्यं शाखाः स्तब्धीभवन्ति च।
सङ्कोचं यान्ति चाङ्गानि दृष्टी यातश्च वक्रताम् ॥२२॥

---

सहस्रारमित्यामनन्ति तान्त्रिकाः। तन्मूलतश्च निर्गतः सुषुम्नाकाण्ड पृष्ठ-वंशाभ्यन्तरस्थः। नाड्यश्च निखिलसंज्ञाचेष्टावहाः सुषुम्नाकाण्डं द्वारीकृत्य मस्तिष्काश्रयाः साक्षाद् वा मस्तिष्कप्रभवा इति शारीरबीजमत्र स्मर्त्तव्यम्। मस्तिष्कमूले मस्तिष्कस्य मूलप्रदेशे अध.प्रदेशे इति यावत्। सुषुम्नाकाण्डं परितः तत्समन्तात्। अतएव तच्छादिकलान्तराले—तच्छादिनी च एका स्थूलकला बहिःस्था स्थूलपटाकारा, अपरा तत्संलग्ना सूक्ष्मा, तयोरवकाशे। विषं जीवाणुसंघातसमुत्थम्, तद्रोगमृतकपरोक्षाया तत्रस्थ-लसीकादौ जीवाणुसंघात-दर्शनात्। जीवाणूनां हि शोणितप्रविष्टाना सर्वदोषप्रकोपणानां तत्रैव विशेषेण विकारप्रदत्वम्। चेष्टावहानामिति। आक्षेपो हि चेष्टावहा नाडीराश्रित्य प्रवर्त्त-मानेन वायुसंज्ञकवेगेन जन्यते, स च वेगः तादृशनाडीमूलाना मस्तिष्कसुषुम्नाकाण्ड गतानामुत्तेजनविशेषात् प्रवर्त्तते,। यत्तु प्राचां—"यदा तु धमनीः सर्वा कुपितो-ऽभ्येति मारुतः—इति"—तत्रापि अयमेवाभिप्राय', परं धमनीपदस्य नाड्यर्थे प्रयोगः। तदेतदखिलमस्माभिः प्रत्यक्षशारीरस्य उपोद्घातभागे विशदं व्याख्यातम्। अत्र तु दिङ्मात्रमभिधीयते ॥ ११८—११९ ॥

आक्षेपकरूपमाह—तीव्रेति। वमथुः वमिः। जातुचिद् कदाचिद्। शीर्षं पश्चादाकृष्यते ग्रीवापृष्ठपेशीना दृढसङ्कोचेन। सङ्कोचं यान्ति चाङ्गानि जान्वादिसङ्कोचेन कुण्डलीभूत इव तिष्ठति रोगी। दृष्टी वक्रता यातः केकरतां व्रजतः। लक्ष्मणामिति - अभिघातविशेषेण त्वगधो रक्तस्य क्वचिदभिघातादिना

तन्द्रा प्रलापो मोहश्च आक्षेपश्चान्तराऽन्तरा ।
लक्ष्मणां श्यावरक्तानां गात्रेषु च समुद्भवः ॥ १२२ ॥
सर्वेन्द्रियप्रणाशश्च क्रमादाक्षेपके ज्वरे ।
एकाहान्म्रियते कश्चिद् त्र्यहाद्वा दारुणे ग्रहे ॥ १२३ ॥
क्लिश्यंस्त्रिचतुरान् वाऽथ सप्ताहान् विजहात्यसून् ।
क्वचिच्चतुष्पात्-सम्पत्तौ दिष्ट्या कश्चन जीवति ॥१२४॥

अथ मसूरिकाज्वराः ।

मसूरिकाणां वैविध्यं पूर्वैर्यद्यपि कीर्त्तितम् ।
प्राधान्याल्लाघवाच्चेह वक्ष्यन्ते तु त्रिधैव ताः ॥ १२५ ॥
तत्राद्या बृहती नाम द्वितीया लघुनामिका ।
रोमान्तिका तृतीया च त्रिधा भिन्ना मसूरिका ॥ १२६ ॥

---

सपदि स्त्यानीभावाद् यादृशानि भवन्ति लक्ष्माणि, इह प्रायस्तादृशानि लक्ष्माणि दृश्यन्ते सर्वगात्रेषु । विलीयन्ते च तानि स्वत एव त्रि-चतुर्रैर्दिनैः । क्रमादिति शनैः सर्वेन्द्रियप्रणाशः । दारुणस्थले तु सद्य एव । चतुष्पात्सम्पत्तौ—"भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्"—इति शोभने पादचतुष्टये मिलिते । दिष्ट्या तथापि भाग्येन क्वचित् कश्चिज्जीवति ॥ १२०—१२४ ॥

अथ विषाभिषङ्गजत्वसामान्यात् मसूरिकाज्वरानप्यागन्तुज्वरेऽन्तर्भावय-न्नुपक्रमते—**मसूरिकाणामिति** । वैविध्यं विविधत्वम् । पूर्वैर्माधव-भाव-मिश्रादिभिराचार्यैः, नतु चरक सुश्रुतादिभिः प्राचीनतन्त्रकारैः । तैर्हि सूत्रमात्रेण निर्द्देशात् । तथाहि क्षुद्ररोगाधिकारे सुश्रुतः—"दाह-ज्वर-रुजावन्तस्ताम्राः स्फोटाः सपीतकाः । गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ।" इति (सु० नि० १३ अ०) । चरके च श्वयथुचिकित्सिते—"याः सर्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः" इति (च० चि० १२ अ०) । तन्त्रान्तरेऽप्युक्तं—"पित्तं शोणित-संसृष्टं यदा दूषयति त्वचम् । तदा करोति पिड़काः सर्वगात्रेषु देहिनाम् । मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि । मसूरिकास्तु ता ज्ञेयाः पित्तरक्ताधिका

---

१ । डल्हनश्रीकण्ठाभ्यामुद्धृतोऽयं पाठः ।

भू-वायु-जलदोषादेर्भवन्त्यागन्तुहेतवः ।
संक्रामिण्यो विशेषेण निदाघादौ मधौ च ताः ॥१२७॥
"तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरुचिर्भ्रमः ।
त्वचि शोथः सवैवर्ण्यं नेत्ररागश्च प्रायशः" ॥ १२८ ॥

## अथ बृहन्मसूरिका ।

[ Small Pox—Variola ]

( परिचय )

मसूराकारपिड़काः सोन्द्रा गात्रेषु सर्वतः ।
भवन्ति पाकं गच्छन्ति लीयन्ते च द्रुतं यतः ॥ १२९ ॥

---

वुधैः ।" इति । एवञ्च प्राचां समये प्रसिद्धो मसूरिकाख्यः क्षुद्ररोगः कालेन घोररोगे परिणत इति सुवचम् । आहुश्च प्राणान्तकरी जानपदिको मसूरिका सार्द्धसहस्रवर्षेभ्यः प्राङ्नाभूदिति ऐतिहासिकाः[1] । प्राधान्यादिति – वक्ष्यमाण-जातित्रये सर्वेषां मसूरिकाभेदानामनुप्रवेशात् । लाघवात् संख्यालघुत्वात् । इहास्मिन् ग्रन्थे ॥ १२५—१२६ ॥

**भूवायित्विति** । प्रथमोद्भवकाले भूवायुजलदोषहेतोरवश्यस्वीकरणीयत्वात्, अन्यथा अनवस्थाप्रसङ्गः । आदिपदेन रोगिस्पर्शादिकारणं वक्ष्यमाणं गृह्यते । ननु माधवादिभिरुक्तं—"कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः । दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः । क्रूरग्रहेक्षणाच्चापि"—इत्यादि कथं संगच्छते? श्रूयताम् । कट्वम्लादिभोजनात् पित्तप्रकोपेण क्षेत्रं भवति, प्रदुष्टपवनोदकेभ्यस्तु विषसंक्रमः । ननु विषं तु पार्थिवमेव स्यात्, पवनोदकयोस्तु तद्वाहकतामात्रमिति चेत्? सत्यम् । अतएव मूले भूवायुजलदोषादेरित्युक्तम्[2] । अतएव आगन्तु-हेतवः, पूर्वोक्तहेतोस्तद्रोगिस्पर्शनादिप्रविष्टेन विषेण च मसूरिकोत्पत्तेर्बहुधादर्शनात् । संक्रामिण्यः, जनाज्जने संक्रमणशीलाः ॥ १२७ ॥

सर्वासां मसूरिकाणां साधारणपूर्वरूपमाह प्राचीनपद्येन—**तासामिति** । गात्रभङ्गः, भग्नवद् वेदना गात्रेषु । त्वचि शोथः स्तोकेनैव । सवैवर्ण्यः किञ्चिद्-विशिष्टवर्णतासहितः । कण्डूशोथवैवर्ण्यानि पूर्वरूपे बहुधा नापि दृश्यन्ते ॥ १२८ ॥

बृहन्मसूरिकापरिचयमाह—**मसूराकारेति** । मसूराकाराः समग्रमसूर—

---

१ । एतत्प्रसङ्गविस्तरः परिशिष्टे रोगेतिवृत्तप्रकरणे द्रष्टव्यः ।
२ । जीवाणुकारणता च मसूरिकाणां नाद्यापि प्रमाणीकृता केनापि ।

नानोपद्रवसंयुक्तो ज्वरो यत्र सुदारुणः ।
बृहन्मसूरिका नाम शीतला चेति सा स्मृता ॥ २३० ॥

( निदान सम्प्राप्तिश्च )

वाय्वादिदोषादथवान्यरोगि-
स्पर्शादथैतत्पिड़कात्वचो वा ।
नासागलाद्यैः प्रविशद् विषं तद्-
दोषानशेषान् विकरोति सद्यः ॥ २३१ ॥
ततो ज्वरः स्यादतिघोरलिङ्गो
दोषा विषं तच्च बहिः क्षिपन्ति ।
गात्रेषु जाताः पिड़कास्ततस्ताः
पक्वाः क्षयं यान्ति विषक्षयेण ॥ २३२ ॥

---

सदृशाः, कदाचिद्वृहत्तराः क्षुद्रतरा वेत्युपलक्षणाद् बोध्यम् । तन्त्रान्तरे चोक्तं— "मसूरमुद्गमाषाणा तुल्याः कोलोपमा अपि ।"—इति । कोलोपमत्वञ्च बहूनां स्फोटाना समेलनात् क्वचिदेव । सान्द्रा घनसन्निवेशा. —इति भेदक लिङ्गम् ( दृश्यता ३य चित्रम् ) । लघुमसूरिकायान्तु प्रविरलास्ता इत्यग्रे वक्ष्यते । भवन्ति निःसरन्ति । द्रुतमित्यपि भेदकं लिङ्ग, रोमान्त्यो विलम्बेन शनैश्च पिड़कोद्गम-विलयदर्शनात् । शीतलेति संज्ञा † तु लोकप्रसिद्धा भावमिश्राचार्य्येण स्वग्रन्थे समुपनिबद्धा, परं लिङ्गानि तत्रापि न्यूनानीति विस्तरकथनार्थमेव ग्रन्थः । १२९—१३० ॥

निदानं संप्राप्तिञ्चाह —वाय्वादीति । आदिपदेन भूजलयोर्ग्रहणम् । संक्रमण-काले वायोः प्राधान्यात्तन्मुखेन निर्देश. । हेत्वन्तरमाह अन्यरोगिणः स्पर्शात्, तदीयपिड़कारसादिसम्पर्कात् । एतद्रोगिण. पिडकात्वचो वा हेतो. । मसूरिका-पिड़काना प्रशोषणकाले मुक्ता यास्त्वचः, तासां विशेषेण सक्रामकत्वमिति विशेषं प्रतिपादयितुमेतदभिधानम् । दोषा वातादयः । बहि क्षिपन्ति त्वचि नि.सरयन्ति पिड़काद्वारेण । अन्यत् स्पष्टम् ॥ १३१—१३२ ॥

---

† यत्तु तेन शीतलेति संज्ञा सर्वमसूरिकासाधारणी कल्पिता, तच्चिन्त्यम् । लोके बृहन्मसूरिकाया, एव ततसंज्ञया प्रसिद्धे । न चास्ति क्वापि चरकादि ग्रन्थेषु शीतलेति संज्ञा तत्पूजाद्युपदेशो वा ।

तारतम्येन दोषाणां विषस्य च बलाबलात् ।
पृथग् वाऽत्यन्तसान्द्रा वा सरक्ता वा भवन्ति ताः ॥२३३॥

( रूपम् )

आदितः शीतकम्पाभ्यां शिरःशूलेन च ज्वरः ।
प्रवर्त्तते वर्द्धते च कटीपृष्ठं रुजन् भृशम् ।
ततो मोहः प्रलापश्च प्रायेणान्येऽप्युपद्रवाः ॥ २३४ ॥
तृतीये तु दिने प्राप्ते ज्वरो व्रजति लाघवम् ।
पिड़काश्च प्रदृश्यन्ते गम्भीरास्त्वगधः स्थिताः ॥ २३५ ॥
केशान्तेषु ललाटे च तथाच मणिबन्धयोः ।
समुद्भूय प्रसर्पन्ति मुखेऽङ्गेषु च ताः क्रमात् ॥ २३६ ॥
अथ षष्ठे तु दिवसे प्रपूर्य्यन्ते जलेन ताः ।
अष्टमेऽह्नि च पूयेन वर्द्धते च ज्वरस्ततः ॥ २३७ ॥
शनकैर्हीयते चापि विषे प्रलघुतां गते ।
प्रायशो द्वादशाहेन शुष्यन्ति पिड़काश्च ताः ॥ २३८ ॥

---

बृहन्मसूरिकायाः प्रकारत्रयं वक्ष्यमाण सम्प्राप्तिमुखेन सूचयति—तारतम्येन इति । दोषाणा वातादीना तरतमभावेन, तुल्येऽपि विषे क्षेत्रवैचित्र्यादिहेतो-र्दोषकोपमात्राभेदादित्यभिप्रायः । विषस्य च बलाबलात् तीव्रबलत्वादल्पबलत्वाद्वा हेतो. । पृथक्, असंमिलिताः । अत्यन्तसान्द्राः संमिलितप्रायाः । सरक्ताः रक्तपूर्णाः ॥ १३१ ॥

बृहन्मसूरिकारूपमाह—आदित इति । आदित आदौ । कटीपृष्ठं रुजन् पीड़यन्निति सूचकं लिङ्गं विशेषेण । अन्येऽप्युपद्रवाः, इन्द्रियनाशादय । क्वचिन्मरणमपि दृष्टं विषाधिक्येनास्यामेव दशायाम्, तत्र मृतकपरीक्षया अन्तर्निर्गतानां पिड़कानां दर्शनाद्रोगनिर्णय. सम्भवति नान्यथा । तृतीये तु दिने इति प्रायिकमेतत् । क्वचित् चतुर्थेऽपि दिने पिड़कारम्भ । गम्भीरा इति गम्भीरावस्थाना', अयमेवार्थः स्पष्टतरमुक्तस्त्वगधःस्थिता इति विशेषणेन

विशोर्यन्ते च पक्षेण त्रिसप्ताहैस्तु नैरुजम्।
यावज्जीवं च लक्ष्माणि तिष्ठन्ति प्रायशस्त्वचि ॥ १३९ ॥
विकाराः सन्निपातोक्तास्तदन्तेऽप्यविलक्ष्य ये।
ते प्रायेणात्र जायन्ते श्लेष्मबाधाश्च दारुणाः ॥ १४० ॥

---

लघ्वी मसूरिका तु त्वग्गतैव। अतएव सुश्रुतो "गात्रेषु वदने चान्तः" इति स्पष्टं विशिनष्टि बृहतीम्। तेन गलादीनामन्तः, क्वचिदामाशयादीनामप्यन्तश्च समुद्भवन्ति पिड़का इति स्मर्त्तव्यम्। अन्यत् स्पष्टम्। ( दृश्यतां तृतीय-चित्रम् ) ॥१३४—१३८॥

तृतीयचित्रम्



बृहन्मसूरिका-पिड़का ( अत्र पिड़कानां घनसन्निवेशो लक्ष्य. )

**विशोर्यन्ते** इति। नैरुजमारोग्यम्। लक्ष्माणि चिह्नानि, लघुमसूरिका-चिह्नानि तु द्रुतं विलीयन्ते। श्लेष्मबाधाश्च दारुणा', सश्वासमार्गस्य फुस्फुसस्य आक्रमणात्। ततश्च बहुधा म्रियन्ते रोगिण । पूर्वोक्तश्वसनकज्वरसदृशलिङ्गै-रुपद्रुतस्तु मसूरिकावान् नैव जीवति ॥ १३९—१४० ॥

( प्रकारत्रयम् )

घोरे विषास्रिपङ्के तु दोषकोपात् सुदारुणात् ।
पिड़का अतिसान्द्राः स्युः घोरश्चोपद्रवैर्ज्वरः ॥ १४१ ॥

अष्टाहात् परतस्तेन प्रायशः स विपद्यते ।
कुथ्यन्ते क्वापि पिड़काः ज्ञेया तत्राप्यसाध्यता ॥ १४२ ॥

शोणितेऽतिप्रदुष्टे तु रक्तपित्तं प्रवर्त्तते ।
रक्तपूर्णाश्च पिड़काः, प्राणास्तत्रापि दुर्लभाः ॥ १४३ ॥

(प्रसङ्गात् कृतक-मसूरिका, गो मसूरिका च )

बृहन्मसूरीत्वक् चर्म्मण्युत्कीर्णा विधिपूर्वकम् ।
कतिचित् पिड़काः कृत्वा प्रतिषेधाय कल्पते ॥ १४४ ॥

परं प्राणात्ययः क्वापि ततः स्यादिति केचन ।
गोमसूरीरसेनैव प्रतिषेधन्ति तं गदम् ॥ १४५ ॥

---

मसूरिकायाः प्राणान्तकं प्रकारत्रय प्राह—घोरे इति । विपद्यते म्रियते स रोगी—इत्यन्त एकः प्रकारः । अत्र यदा कश्चिद् जीवति, तदा चिरेण विशीर्य्यन्तेऽस्य पिड़काः । अथ कुथ्यन्ते प्रकुथिताः शटिनाः कृष्णाभा भवन्ति पिड़का—इति द्वितीयः प्रकारः । रक्तपित्तं प्रवर्त्तते मुखेन वा पायुना वा मूत्रमार्गेण वा रक्तनिःस्रवो भवति, पिड़काश्च यथाकालं जलेन पूयेन वा न पूर्य्यन्ते किन्तु रक्तेन । सोऽयं तृतीयः प्रकारः । दृश्यते च कदाचिदेषां सङ्करोऽपि ॥ १४१—१४३ ॥

अथ प्रसङ्गात् प्रतिषेधविधिविषयत्वाच्च कृतकमसूरिकां गोमसूरिकाञ्चाह—**बृहन्मसूरीति** । बृहन्मसूरीत्वक् तत्पिड़कायाः शुष्कत्वच् । सा चेत् विधिपूर्वकं स्वस्थ-जनस्य चर्मणि उत्कीर्णा, प्रच्छिते बाह्वादिचर्मणि नासापुटे वा सचूर्णं प्रवेशिता घ्राता वा स्यात्, तर्हि कतिचित् पिड़का मसूरिकासलिङ्गाः कृत्वा प्रतिषेधाय पुनराक्रमणवारणाय कल्पते । सेयं कृतकमसूरिका भारतीयवैद्यै—राविष्कृता प्राग् वर्षशतादपि सुप्रचलिता इदानीं विलुप्तप्राया । तत्रभाविनीं

वृहन्मसूरिका गोषु संक्रान्ता गोमसूरिका।
तद्रसः प्रच्छिते चर्म्मण्यर्पितः प्रतिषेधकः॥ १४६ ॥
तत्राद्यः प्रतिषेधो यो यावज्जीवं स तिष्ठति।
निरत्ययो भवेदन्यः प्रतिषेधस्तु नश्वरः॥ १४७ ॥

---

व्यापदमाह **परं प्राणात्यय** इत्यादिना। स च क्वचिद् घोररूपाणां पिड़कानां सम्भवात्। गोमसूरीरसप्रयोगविधेराविष्कारस्तु पाश्चात्यैः कृत *। याऽसौ मानुषे वृहन्मसूरिका सैव गोषु संक्रान्ता गो-मसूरिका भवति। संक्रमणञ्च तद्विषसंक्रमादित्यर्थादायाति। प्रच्छिते लेखनशस्त्रेण कृतसूक्ष्मरेखापाते गात्र-चर्मांशे तस्या गोमसूरिकाया यो रसो लसीका, स चेदर्पित. प्रवेशितः तदा प्रतिषेधकः, वृहन्मसूरिकायाः इति शेषः। अतएवायं प्रतिषेधविधिः पाश्चात्यैर्बहु-परीक्षित प्रयुज्यते राजपुरुषैरिदानीम्। स च स्वल्पलिङ्गः स्वयमेव शीघ्रं प्रशाम्यति, न च संक्रामति जनाज्जनं स्पर्शमात्रेण वृहन्मसूरिकावत्। प्रायश्च तत्पिड़कोद्गमः सर्वं गात्रेषु न भवति, तथापि प्रच्छिते स्थाने पञ्चमे षष्ठे वा दिने पिड़कोद्गमस्तद्विलयश्च शनैः पक्षेण भवत्येव, तज्जश्चो ज्वरश्च स्तोकेन द्वित्रदिनस्थायी प्रायः। तत्राद्य—इत्यादि। तत्र प्रतिषेधविध्योर्मध्ये, आद्यः वृहन्मसूरीत्वकचूर्णस्य प्रच्छितचर्मणि प्रयोगेण कृतः प्रतिषेधः यावज्जीवं तिष्ठती-ति विशेषः। अन्यस्तु निरत्ययः, आद्यविधौ यथा क्वचित् प्राणहानिशङ्का नेह तथेति हेतोः ‡। परमत्र न्यूनतामाह प्रतिषेधस्तु नश्वर इति। न चिरं तिष्ठति प्रतिषेध इति भावः। तेन द्वित्रैर्वर्षैः पुनः सोऽयं विधिरनुष्ठातव्यो भवति, अन्यथा क्व प्रतिषेधः?

इदञ्चात्रावधेयम्। वृहन्मसूरिकोत्तीर्णस्य न भवति प्राय. पुनराक्रमणशङ्का। तेन दशवर्षाभ्यन्तरे तस्य गोमसूरीरसादान नावश्यकम्। कस्यचित्तु तथाविधः प्रतिषेधो यावज्जीवं तिष्ठति इति स्मर्त्तव्यम्॥ १४१—१४७॥

---

* "विलियम् जेनर" ( William Jenuer ) नाम्ना केनचिद् आंग्लजनेन खृ० १७६६ शतके प्रवर्त्तितोऽय विधिरिङ्गलण्डभूमौ। ‡ क्वचित्तु एतद्विधिनाऽपि व्यापत्तिर्भवत्येवेति स्मर्त्तव्यम्।

## अथ लघुमसूरिका ।

( Chiken Pox or Varicella )

( परिचयः )

विरलाः कतिचिद् यस्य पिडकाः शीघ्रसम्भवाः ।
ज्वरः स्वल्पश्च तस्याऽसौ ज्ञेया लघुमसूरिका ॥ १४८ ॥

( निदानादि )

वाय्वादे रोगिसङ्गाद् वा संक्रान्तं तद्विषं तनौ ।
दोषकोपं विधायाल्पं निरेति त्वचि सत्वरम् ॥ १४९ ॥

अथ लघुमसूरिकामाह—विरला इति । विरला दूरान्तरिताः, न तु बृहन्मसूरिकावत् घनसन्निवेशाः ( दृश्यतां चतुर्थं चित्रम् ) ॥ १४८ ॥

४र्थं चित्रम्



लघुमसूरिका-पिडकाः । अत्रासां विरलत्वं लक्ष्यम् ।

अथ निदानादि व्याचष्टे—वाय्वादेरिति । वाय्वादेर्हेतुता च परम्परया पूर्वोक्तनयेन । वस्तुतस्तु प्रथमोद्भवकाले क्षितिजमेव विषं स्याद्

ततस्ताः पिड़काः स्वल्पो ज्वरः स्वल्पश्च जायते।
शीघ्रमुल्लाघता चापि पिड़कानां प्रशोषणात् ॥ १५० ॥

( रूपम् )

नातितीव्रो ज्वरः स्वल्पलिङ्गः शीघ्रं प्रमुञ्चति।
प्रथमेऽह्नि द्वितीये वा पिडकाः सम्भवन्ति च ॥ १५१ ॥
विरलाः स्वल्पसंख्याकाः क्षुद्रमौक्तिकसन्निभाः।
अमध्यनिम्ना भिन्नास्तु तोयमात्रं स्रवन्ति ताः ॥ १५२ ॥
पञ्चषैश्च दिनैः प्रायस्ताः प्रशुष्यन्ति सर्वतः।
प्रायोऽष्टमेऽह्नि नैरुज्यं लक्षणाश्च द्रुतं लयः ॥ १५३ ॥
क्वचिद्विषस्य बाहुल्याद् दौर्बल्याद् वाथ रोगिणः।
कोथं गच्छन्ति पिडकाः नानारूपा भवन्ति वा ॥ १५४ ॥
रक्तेन वा प्रपूर्य्यन्ते ज्वरो घोरश्च जायते।
कृच्छ्रसाध्यानसाध्यान् वा प्रकारांस्तान् प्रचक्षते ॥ १५५ ॥

---

जीवाणुकारणता च मसूरिकाणां नाद्यापि केनापि प्रमाणीकृता, तथापि विशेषेण संक्रामकतादर्शनाद् तादृश-विषाभिषङ्गोताऽनुमीयते—इत्यवोचाम। निरेति निर्गच्छति। न चात्र बृहन्मसूरिकावदन्तर्बहिश्च पिडकासम्भवः किन्तु त्वचि एव। अतएव त्वग्गतेयं मसूरिकेत्याहुः पूर्वे। तद्यथा—"तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः। स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च" इति। अस्याश्च गम्भीरधात्ववगाहिता-विरहात् त्वग्गतेति शोभना संज्ञा। उल्लाघता आरोग्यम् ॥ १४६—१५० ॥

अथ रूपमाह—नातितीव्र इति। काचित्कं वैचित्र्यमाह क्वचिद्विषस्य—इत्यादि। एवंविधस्थले बृहन्मसूरिकासाङ्कर्य्यमामनन्ति केचिद्, विषाधिक्यं दोषकोपाधिक्यं वाऽन्ये। प्रचक्षते वदन्ति विज्ञा इति शेषः।

अत्रेदमवधेयम्। लघुमसूरिकायां तृतीयदिनाभ्यन्तरं पिडकोद्गमः, पिडकाना विरलत्वं क्षुद्रप्रायत्वं तोयपूर्णत्वञ्चोदित, मध्यनिम्नत्वाभावः, सत्वरप्रशोषणं, लक्ष्मणां द्रुतं लयश्चेति विशेषाः। बृहन्मसूरिकायान्तु सर्वथा तद्वैपरीत्यम् ॥ १५१—१५५ ॥

## अथ रोमान्तिका ।

( Measles )

( परिचय. )

रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥ १६० ॥

( निदानादि )

निदानं पूर्ववत्तस्या विषं तु पृथगेव तत् ।
प्रायेणाभिभवेद् बालान् कफं पित्तञ्च कोपयेत् ॥ १६१ ॥

श्वाससार्गादिषु प्रायो विकारान् व्रणशोथवत् ।
कुरुते तत् क्रमात्, त्वक्षु निरस्तं च विलीयते ॥ १६२ ॥

---

मसूरिकायास्तृतीया जातिमाह प्राचीनवचनेन—रोमकूपेत्यादिना । ननु रोमान्तिकायां क्षुद्रप्रमाणपिडकाना दर्शनात् कथमिय मसूरिकेति चेत् । उच्यते । पिडकोद्गम विलयादि बहुलिङ्गसादृश्यात्, केषाञ्चिदाचार्य्याणां पक्षाङ्कानुसरणेन हि मसूरिकेयमुच्यते । यद्यपि चरके मसूरिकाभ्य. पृथगेवाभिहिता रोमान्त्यः—यथा तत्रादौ "क्षुद्रप्रमाणा' पिडकाः शरीरे सर्वाङ्गगाः स-ज्वर-दाह-तृष्णाः । कण्डूयुताः सारुचि सप्रसेका रोमान्तिका' पित्तकफात् प्रदिष्टा."—इति पृथगेवाभिधीय पुनरुक्तं —"याः सर्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः"—इति (च० चि० १२ अ०), तथापि माधव-शार्ङ्गधर-भावमिश्रादीनामाचार्य्याणां संवादेन वर्णनं न दोषाय, तेषामेव ग्रन्थेषु मसूरिकावर्णनविस्तरदर्शनात् । रागिण्यः ताम्राभरागवत्यः । पिडका इति शेषः । रोमान्त्य, रोम्नामन्तेषु जाता इति तत्संज्ञाः । ज्वरपूर्विका इति प्रायः पिडकोद्गमे ज्वरलाघवदर्शनात् । प्रायेणाभिभवेद् बालानित्युक्तेर्बालानां विशेषेण कष्टप्रदोऽयं रोगो बहुधा मारकश्चेत्यभिप्रायः । श्वाससार्गादिषु, श्वासनलिकासु फुस्फुसयोश्च । तद् विषम् । त्वक्षु चर्मसु निरस्तं निःक्षिप्तं सत् प्रविलीयते विलयं याति ॥ १६०—१६२ ॥

तत्रादितः प्रतिश्यायो ज्वरो रागश्च नेत्रयोः ।
तन्द्राऽरुचिः क्लमः कासो विड् भेदश्चापि कुत्रचित् ।
शोणायतानां ताल्वादौ दर्शनं लक्ष्मणां ध्रुवम् ॥
अथ तुर्य्यात्तृतीयाद्वा दिनात्ताम्राभलक्ष्मणाम् ।
स्तोकोन्नतायतानां स्यान्मुखे गात्रेषु चोद्भवः ॥
द्वित्रैश्च दिवसै स्तेषां सर्वेन्निःशेषनिर्गमः ॥ १६३-१६५ ॥
ततो ज्वरश्च लघुतां याति नो चेदुपद्रवाः ।
त्र्यहाल्लयश्च चिह्नानां तुषाभत्वग्विमोक्षणात् ॥ १६६ ॥
अथ चेद् रोगमध्ये वा रोगशेषेऽथवा क्वचित् ।
तद्विषं श्वासनलिकाः फुस्फुसौ च प्रसर्पति ॥

---

रूपमाह—तत्रादित—इत्यादि । विड्भेदः अतीसार, स च क्वचिदेव, मलधराया कलायां सूक्ष्मपिडकानां निर्गमाद्, विशेषेण पित्तप्रकोपाच्च । कासश्च श्वासनलिकादिषु तादृशपिडकासम्भवात् कफकोपाच्च । शोणायतानामिति तु प्रथमाऽवस्थायां विशिष्टं भेदकं लिङ्गं स्मर्त्तव्यम् । तुर्य्याच्चतुर्थात्, तृतीयाच्चतुर्थाद्द्वा दिनादारभ्य दिनद्वयं दिनत्रयं वा यावदुद्भवन्ति लक्ष्माणि । तानि च सूक्ष्मपिडकासंघातमयानि विषमवृत्ताद्याकाराणि यतस्तत. सम्भवन्ति । स्तोकेन उन्नतानि आयतानि विस्तृतानि चेति स्तोकोन्नतायतानि । आदौ मुखमण्डले दर्शनान्मुखे इति प्रथमतो निर्द्देशः । नो चेदुपद्रवा.—इत्युक्तेरयमभिसन्धि । यदि फुस्फुसाक्रमणात् कासश्वासादय. प्रबलाः स्युस्तदा ज्वरः प्रबल एव तिष्ठति वर्द्धते वा । त्र्यहाल्लयः—दिनत्रयं व्याप्य क्रमशो लय' । तुषाभत्वगिति, पिडकाना सूक्ष्मत्वात्तत्त्वचोऽपि सूक्ष्मास्तुषसदृशा पतन्ति । विशेषेण च तादृशपिडकात्वचो रोमान्तिका-विषाधारभूता. सङ्क्रमणसाधनानि इतरमसूरिकात्वग्वत् ॥ १६३—१६६ ॥

अथ रोमान्तिकायां प्रायोभाविन. फुस्फुसाक्रमणस्य लिङ्गानि वर्णयति—अथ चेद्—इत्यादि । तीव्रं हि रोमान्तिकाविष यदि श्वासनलिकाः फुस्फुसौ च प्रसर्पति, व्रणशोथेन पीडयतीति यावत्, तदा प्रबलानि श्वासादिलिङ्गानि ।

तदा श्वासश्च कासश्च ज्वरवेगश्च वर्द्धते ।
मोहस्तन्द्रावसादश्च प्रायश्च प्राणसंशयः ॥ १६७।१६८ ॥
म्रियन्ते च ततो बाला विशेषेण सहस्रशः ।
जीवन्त्युपक्रमात् केचित् सुचिरं दुर्बलीकृताः ॥ १६९ ॥
गम्भीररक्तचिह्नानां रक्तपित्तस्य चेक्षणात् ।
वृत्ते रक्तातिसारे वा रोमान्त्यां दुर्लभं सुखम् ॥ १७० ॥

---

दण्डकज्वरः ।

( Dengue )

अस्थिसन्धिरुजास्तीव्रा दण्डाहतिकृता इव ।
क्वचिद् क्षिप्रोदयलयो वीसर्पः सर्वगात्रयः ॥ १७१ ॥
ज्वरश्च कण्ठरुग्युक्तः पुनरावर्त्तते गतः ।
सञ्चारिणा सशोथेन सन्धिशूलेन लक्षितः ॥ १७२ ॥

---

तानि च श्वसनकसन्निपातसदृशानि भूम्ना, केवलं रक्तनिष्ठीवनं स्वेदबाहुल्यञ्चन प्रायो भवतः । उपक्रमात् चिकित्सानैपुण्यात् ॥ १६७—१६९ ॥

अथ रक्तपित्तोलक्षणामसाध्यां रोमान्तिकामाह—गम्भीरेति । गम्भीराणि त्वचामध. संहतशोणितचिह्नप्रायाणि । रक्तपित्तस्य, उर्द्ध्वमधो वा प्रवृत्तस्येति शेषः । सुखमारोग्यं दुर्लभम्—इत्युक्त्या असाध्यतामतिकृच्छ्रसाध्यतां वा ख्यापयति ॥ १७० ॥

अथ दण्डकाख्यज्वरलिङ्गान्याह—अस्थिसन्धीति । दण्डाहतिर्दण्डाघात-स्तत्कृता इव रुजाः अकस्मात् प्रादुर्भवन्ति । इदमेव दण्डकसंज्ञाकरणे वीजम् । वीसर्पवद् ईषदुन्नत रक्ताभ बृहत्कोठमाय., स च तृतीये चतुर्थे वा दिने क्षिप्रमुदेति; लीयते च क्षिप्रं, स्वत एव । क्वचित् श्यामगात्रस्य नापि दृश्यते । पुनरा-वर्त्तते गतः, दिनैकं दिनद्वयं वा ज्वरयित्वा मुञ्चति, त्रिचतुरेश्च दिनै. पुनरावर्त्तते ज्वरः, क्वचित् पुनरपि किञ्चिद् वीसर्पसहित. । कण्ठरुजा सन्धिशूल-शिरःशूलादीनि च प्रायेण ज्वरसहचराणि । प्रतिश्या प्रतिश्यायो नासादिस्राव । चिरमिति अप्राहेन । ज्वरनिर्मुक्तावपि स्थानात् स्थानान्तरं सञ्चरन्त्य. सन्धिरुजाश्चिराय बाधन्ते--

प्रतिश्या-कासवान् प्रायेणाष्टाहेन प्रमुच्यते।
चिरं सन्धिरुजाः सन्ति स ज्ञेयो दण्डकज्वरः ॥१७३॥
प्रायोऽसौ जानपदिको वातश्लेष्मप्रकोपनः।
बालानां जरतांश्चातिदारुणः परिलक्ष्यते ॥१७४॥

## कर्णमूलिकज्वरः।

(Mumps)

एकतः कर्णमूलेऽथानुपदञ्चान्यतः पुनः।
शोथः सरुग्ज्वरो यत्र स ज्ञेयः कर्णमूलिकः ॥१७५॥
पञ्चषैस्तु दिनैस्तत्र रुजाशोफौ प्रणश्यतः।
स्यातांश्च कोषयोः प्रायो दशाहाच्च सुखम्भवेत् ॥१७६॥
स प्रायो जानपदिको वातश्लेष्मकृतो ज्वरः।
बालानामथ यूनाञ्च विशेषेण प्रवर्त्तते ॥१७७॥

---

इत्यभिसन्धिः। जानपदिको जनपदविशेषं व्याप्य युगपद् बहुषु प्रवर्त्तमान। जरतां वृद्धानाम्। अतिदारुणः क्वचित् प्राणान्तकरोऽपि। अन्यत् स्पष्टम् ॥ १६६-१७२

अथ कर्णमूलिकज्वरमाह—एकत इति। अनुपदं दिनैकेन दिनद्वयेन वा। ननु कर्णमूलशोथः पाषाणगर्दभसंज्ञया पूर्वाचार्य्यैरुक्त एव—यथा "वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः। स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः" इति? सत्यम्। पर तत्र प्रायेण एकत एव कर्णमूले शोथ, ज्वरश्च नास्ति। इह क्रमेणोभयतः शोथः सज्वरः, मुष्कादिशोथश्चानन्तरभावी प्राय इति विशेषः। यत्तूक्तं—"ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः। क्रमेण साध्यः खलु कृच्छ्रसाध्यस्ततस्त्वसाध्य कथितो भिषग्भिः"—इति। तत्र ज्वरादौ भावी कर्णमूलिकशोथः कर्णमूलिकज्वर एवास्तु, परमेषः प्रायेण जानपदिक इति विशेषः। रुजाशोफौ प्रणश्यतः, कर्णमूलयोरिति शेषः। पञ्चषै. पञ्चभिः षड्भिर्वा दिनैः। स्यातांश्चेति।—रुजाशोफौ पुन. वृषणयोरपि प्रायो भवति नतु सर्वत्र। कोषयोरिति सामान्याभिधानात्, पुंसां मुष्कयोः, स्त्रीणां बीजकोषयोरिति बोध्यम्।

## अथ विषमज्वराः।

यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥१७८॥

स्त्रीणा बीजकोषौ च अभ्यन्तरत एव तलोदरे, उभयतः, तेन स्त्रीणा वंक्षणयोरूर्द्ध्व मेकत उभयतो वा रुजाप्रादुर्भावः। दशाहाच्चेति प्रायिकम् ॥ १७३-१७५ ॥

अथ विषमज्वराणां सामान्यलिङ्गान्याह भालुकितन्त्रवचनेन—**यः स्याद्**—इति। अनियतात् कालात् अनियतकालं व्याप्य तदारभ्य वा। शीतोष्णाभ्यां शीतपूर्वं दाहं दाहपूर्वं शीतं वा कृत्वा। वेगतो विषमः कदाचित्तीव्रेण कदाचिन्मन्देन वा सन्तापादिना उपलक्षितः। इदञ्च कालादिवैषम्यं विषमज्वरसञ्ज्ञाया बीजम्। वाग्भटोऽप्याह—"विषमो विषमारम्भ-क्रिया-कालोऽनुषङ्गवान्" इति (अष्टाङ्ग हृ० नि० २ अ०)। अस्य ह्ययमर्थः—आरम्भश्च क्रिया च कालश्च आरम्भक्रियाकालाः, ते विषमा यत्र स तादृशोऽनुषङ्गवान् अनुबन्धो ज्वरो विषमज्वर इति। तत्रारम्भो नाम ज्वरप्रकृतिः, तद्वैषम्यं दाह-शीताभ्यां शीत-दाहाभ्यां वा, कदाचित्तु विनैव उभाभ्याम्। क्रिया ज्वर-सन्तापादिः, तद्वैषम्यं कदाचित्तीव्रत्वेन कदाचिन्मन्दत्वेन। कालो द्विविधः, आक्रमणकालो भोगकालश्चेति। तत्राद्यस्य वैषम्यं यथा नियतेऽपि तृतीयादि-ज्वरागम-दिने त्वरया चिराद्वा ज्वरागमः। भोगकालस्य वैषम्यमल्पाधिककालं ज्वरभोगेन। केचित्तु—एतानि हि प्रायिकलिङ्गानि न लक्षणम्, तत्तु मुक्तानु-बन्धित्वं विषमत्वमित्याहुः। ननु तर्हि कथं सन्ततज्वरस्य विषमत्वं, श्रूयते हि—"सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते"—इति। अतएव हि खरनादेनोक्तं—"चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः"—इति चेत्, उच्यते। तत्रापि उत्तरकाले मुक्तानु-बन्धित्वदर्शनादस्ति विषमत्वम्। उक्तञ्च—"विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्त-लक्षणः। दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते।" इति (च० चि० ३अ०) तेन सन्ततज्वरस्य विषमज्वरस्वरूपयोग्यतया विषमत्वं सुसाधम्। खरनादस्तु सुस्पष्टलिङ्गभेदप्रदर्शनाय चिकित्साभेदप्रदर्शनाय च सन्ततज्वरं विषमज्वरेभ्यो भिन्नमाहेति समाधिः।

अथवा मुक्तानुबन्धित्वं विषमत्वमिति लक्षणमेव चिन्त्यम्, विषमज्वरेषु सर्वथा ज्वरमोक्षस्य अदर्शनात्। दृश्यमानेऽपि हि ज्वरमोक्षे तत्र ज्वरस्य चिराय धातुषु प्रच्छन्नतयाऽवस्थानात्। तदुक्तं सुश्रुते—"स चापि विषमो देहं न कदा-

आगन्तुरनुबन्धश्च प्रायशो विषमज्वरे ।
इति प्राञ्चः स चासौ तु रक्तजा जन्तवोऽणवः ॥ १७८॥

चिद् विमुञ्चति । ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते । वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते । धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते ।" इति ( सु० उत्तर० ३८ अ० ) । वयन्तु वाग्भटोक्त 'विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्" इति सर्वाङ्गसुन्दरं लक्षणमेव साधीयो ब्रूमः, सर्वलक्ष्यसमन्वयात् ।

नव्यास्तु कारणतादवस्थ्यादेव सन्ततज्वरस्य विषमत्व मन्येरन् । तथाहि योऽसौ ज्वरकरो जीवाणुः शोणिते संक्रान्तस्तृतीयकादीन् ज्वरानुत्पादयति, स एव सन्ततज्वरिणोऽपि शोणिते प्लीहादौ वा प्रच्छन्नो दृश्यत इति सममुभयोः कारणं, प्रायस्तुल्य-रूपश्चैषां चिकित्साविधिरिति तेषां परीक्षामूलः सिद्धान्तः ॥ १७७ ॥

अथ विषमज्वराणां मुख्य निदानमाह प्राचां वचनं द्वारीकृत्य आगन्तुरिति । अनुबन्धातीत्यनुबन्धः सद्भावस्थायी हेतुः । आगन्तुः साक्षाद् रोगकारि-बाह्यनिमित्तभूतः । तेन विषमज्वरेषु धातुवैषम्यं नाद्यो हेतुः, तत्तु परस्तादुद्भवतीत्यभिप्रेयते । प्रायश इत्युक्त्या कचिद् धातुवैषम्यकृतोऽपि विषमज्वरो भवत्येवेति सूच्यते । वक्ष्यति चाग्रे—"दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम्" इति । "इति प्राञ्चः"—इत्युक्त्या अस्य सिद्धान्तस्य प्राचीनत्व समर्थ्यते । यथा सुश्रुत —"आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे" —इत्यादि ।

अमुञ्चागन्तुमनुबन्धं व्याचष्टे नव्यमतानुसारेण—स चासौ इति । स चासौ पूर्वोक्तोऽनुबन्धो हेतुः—रक्तजा रक्तयोनयः अणवः सूक्ष्मा अदृश्या केवलचक्षुषा अनिरीक्ष्याः ( अणुवीक्षणयन्त्रादिसहायेन चक्षुषा तु दृश्याः ) जन्तवः क्रिमिविशेषाः । सोऽयं नव्यानां परीक्षामूलो निर्णयः । ( ते च जन्तवः परिशिष्टे चित्रैः प्रदर्शनीयाः ) ।

ननु प्राञ्चस्तु भूताभिषङ्गमेव आगन्तुहेतुमाहुः, तदुक्तं "केचिद् भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्" इति चेत् , सत्यम् । परं सुश्रुते श्रूयते—"परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः । आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ।" इति । तेन हेतुनिर्णयपक्षे प्राचामपि संशयोऽभूदिति प्रतीमः, एवञ्च कैश्चिदिति निर्देशेन अप्रतिसिद्धं हि परमतमनुमतं भवतीति न्यायात् प्राचामनुमतमेव भूतेतरागन्तुहेतुकत्वमिति शक्यमसंशयं वक्तुम् । अथ चेत् तद्विशेषनिर्णयो नव्यैः सप्रमाणमिदानीमु-

ते वृत्तताम्रा विविधाः सन्ततादिषु पञ्चसु ।
दंशादिदंशसंक्रान्ता इति नव्यपरीक्षितम् ॥१८०॥
दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥१८१॥

---

प्रत्यस्यते, स कथं न गृह्यताम्? "केशादावप्यस्त्वक्क्रम्यान्ते"—इति केषाञ्चित् सूक्ष्मक्रिमीणां परिचयश्च प्राचीनैरुक्त एवान्यत्रेत्यादि जीवाणुकारणवादप्रसङ्गे पूर्वमवोचाम। अत्रापि सैव दिक्। अथवा भूताभिषङ्गो नाम भूतानां छद्मप्राणिनां जीवाणूनामभिषङ्ग इति व्याचक्षीरन् नव्याः ॥ १७८ ॥

अथैषां ज्वरकरजीवाणूनां विशिष्टपरिचयमाह नव्यपरीक्षानुसारेण ते वृत्तेति। ते जीवाणवः सन्ततादिषु पञ्चसु ज्वरेषु विविधाः प्रायस्तुल्याकृतयोऽपि भिन्नजातयः। वृत्ताः मण्डलप्रायाः पादादिरहिताः, ताम्राभाश्च। दंशो नाम मशकविशेषः, आदिपदेन मत्कुणादीनामपि ग्रहणम्। तेषां दंशादीनां दंशैः संक्रान्ताः दष्टस्य रोगिणः शोणितात् स्वस्थस्य शोणिते सञ्चारिताः। अयमभिसन्धिः। विषमज्वरकरा हि जीवाणवः शोणितभुजां दंशादीनां शरीरे तद्दष्टरोगिशरीरात् प्रविष्टा बहुधा प्रवर्द्धन्ते वंशविस्तारेण। ततश्च तथाविधजीवाणुजुष्टानां दंशात् स्वस्थशरीरं प्रविशन्ति दंशकाले। प्रविष्टाश्च शोणितशोणकणिकासु लब्धाश्रयास्तत्रैव स्वदेहप्रविभागेन बहुगुणीभूताः पुनः पुनर्नवनवशोणकणिका आक्रामन्तः समग्रमपि शोणितं शीघ्रं व्याप्नुवन्ति। ततश्च हेतोः पुनः पुनर्ज्वरागमश्चिरानुबन्धश्च ज्वरस्येति नव्यपरीक्षकाणां प्रत्यक्षपरमः सिद्धान्तः ॥ १७९ ॥

अथ दोषनिमित्तं विषमज्वरमाह सौश्रुतवचनेन—दोषोऽल्प इति। अथवा अहितसम्भूतो मिथ्याहारविहारादिकुपितः अल्पः पूर्वावशिष्टो दोषो वातादिः ज्वरोत्सृष्टस्य विमुक्तज्वरस्य पुरुषस्य विषमज्वरं करोति। किं कृत्वा? अन्यतमं धातुं रसरक्तादि प्राप्य विशेषेण दूषयित्वा। अयं फलितार्थः—द्विविधो हि विषमज्वरः, आगन्तुः निजश्च। तत्राद्यो बाहुल्येनेदानीं दृश्यते, द्वितीयस्तु क्वचिदेव। पूर्वोक्तलक्षणसामान्यात् धात्वाश्रयसामान्याच्च उभयोरपि विषमज्वरसंज्ञा।

साम्प्रदायिकास्तु ज्वरोत्सृष्टस्य वा इत्यत्र 'वा' इति पदेन ज्वरोत्सृष्टस्य अज्वरोत्सृष्टस्य चेति व्याचक्षते। तेन ज्वरोत्सृष्टस्य प्रायः, अज्वरोत्सृष्टस्य तु क्वचिदित्यर्थस्तैराकृष्यते। तन्न सम्यक्, इदानीं लोके वैपरीत्यदर्शनात्। दृष्टानु-

अधिशेते यथा भूमिं बीजं काले प्ररोहति ।
अधिशेते तथा धातून् दोषः काले च कुप्यति ॥१८२॥

---

सारिणो हि खलु नैदानिका भवितुमर्हन्ति, न केवलमन्धपरम्परया गतानुगतिका इति । अथवा, पुरा ज्वरोत्सृष्टस्यैव दोषकृतो विषमज्वरः प्रायिकोऽभूदिदानीन्तु आगन्तुहेतुकः आरम्भाद्विषमश्च भूम्नेति कालपरिणामकृतं वैपरीत्यमस्तु । तथापि साम्प्रतं दृष्टानुसारि व्याख्यानमेव श्रेयः । न च वाच्यम्, "आरम्भाद्विषमो यस्तु यश्च वा दैर्घ्यरात्रिकः । क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम्"—इत्युक्तेः आरम्भाद्विषमस्य ज्वरस्य असाध्यत्वमापद्येत इति । इदानीं आरम्भाद्विषमस्यापि ज्वरस्य प्रायः साध्यतादर्शनात् । जनपदोद्ध्वंसिरूपेण प्राक् पञ्चिवर्षेभ्यः प्रादुर्भूतस्य तु तस्यैव प्रायेणाऽसाध्यता बभूवेति पुनरद्यापि श्रूयते । एवञ्च कालान्तरपरिणामकृतोऽय व्यतिक्रमः स्वीकार्य्यः ॥ १८१ ॥

अथ विषमज्वराणा गतागतहेतुं स्पष्टतरं वर्णयति चरकीयवचनेन—**अधिशेते** इति । यथा बीजं भूमिमधिशेते भूमौ प्रसुप्तं तिष्ठति, काले च प्ररोहति अंकुरीभवति, तथा दोषः, दूषयति रसरक्तादिधातूनिति व्युत्पत्त्या शरीरप्रदूषणो वातादिः, जीवाणुविशेषो वा धातून् रसादीनधिशेते आश्रित्य लीनस्तिष्ठति । काले द्वितीय-तृतीयादिदिने च कुप्यति उल्वणोभवति, प्रवृद्धः सर्वदेह ज्वरयति । सोऽय विषमज्वराणा कालविशेषाश्रयित्वे हेतुरुक्तो बीजांकुरदृष्टान्तेन । संगच्छते चैष दृष्टान्तो जीवाणुकारणवादेन ।

तत्रेदमवधेयम् । दृश्यन्ते हि विषमज्वरिणा रक्तकणिकासु प्रत्यह वर्द्धमानो जीवाणवो ज्वरे ज्वरे पृथग्विधाः । स्वभावतश्च तेषा केषाञ्चिदष्टाभिर्यामैरन्येषां षोड़शभिर्यामैरपरेषां च चतुर्विंशतियामैः कोटिशः सन्ततिविस्तारः, तेन चान्येद्युष्क-तृतीयक-चतुर्थकज्वराणा यथाक्रमं काले काले सम्भवः । जीवाणूनां सन्ततिविस्तारकालश्च प्रायेण ज्वरागमकालः । अत्र चान्योऽपि प्राचा दृष्टान्तो यथा सुश्रुते—'यथा वेगागमे वेला छादयित्वा महोदधेः । वेगहानौ तदेवाम्भस्तत्रैवान्तर्निलीयते । दोषवेगोदये तद्वदुदीर्य्येत ज्वरोऽस्य वा ।'—इत्यादि ।

अत्र दोषवेगोदयश्च प्रायेण विपिष्टजीवाणुवंशवृद्धिकृत एव इत्यवोचाम् ॥१८२॥

## अथ विषमज्वरजातयः ।

सन्ततः सततान्येद्युस्तृतीयकचतुर्थकाः ।
यश्च वातबलासाख्यः क्षयिणाञ्च प्रलेपकः ॥१८३॥
दर्शादिष्वपरो दृष्टो यश्च श्लैपदिको ज्वरः ।
यश्चौपद्रविको दृष्टः प्रायशो जीर्णरोगिणाम् ॥१८४॥
धातुस्थाः सर्व एवैते विज्ञेया विषमज्वराः ।
दुश्चिकित्स्या विशेषेण सर्वदोषप्रकोपजाः ॥१८५॥

## अथ सन्तत-ज्वरः ।

( Malarial Remittent Fever )

सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ॥१८६॥

---

अथ विषमज्वरभेदानाह—सन्तत इति। सन्ततादयः पञ्च प्रसिद्धाः सजातीयाश्च। कालज्वरश्च किञ्चिद्भिन्नोऽपि सततकभेद एव प्लीहोदरत्वानिति वक्ष्यते। वातबलासाख्यो विशिष्टलक्षणको ज्वरस्तु भिन्नजातीयः। प्रलेपकस्तु राजयक्ष्म विद्रध्यादिषु क्षतक्षीणे च दृश्यते अनुबन्धरूपः, तेन क्षयिणामित्युपलक्षणं बोध्यम्। श्लैपदिको नाम दर्श-पौर्णमास्यादिभावी शीतोष्णोपलक्षितो विषमज्वर एव लक्षणसामान्यात्। औपद्रविको ज्वरश्च मुख्यरोगारम्भकदोषप्रकोपजन्यविकारान्तररूपो जीर्णरोगिणां ग्रहण्यादिवर्तां दृष्टः। य एते नवधा संख्याता विषमज्वरा आविष्कृततमा इहोक्ताः, सर्वे च ते धातुस्थाः वक्ष्यमाणरीत्या धातुविशेषाश्रयिणः. सर्वदोषप्रकोपजाः;—प्रायेण आगन्तुहेतुकत्वेऽपि सर्वत्र काले दोषत्रयप्रकोपसामान्यदर्शनात् सान्निपातिकाः। अतएव विशेषेण दुश्चिकित्स्याः चिरानुबन्धित्वात् , उक्तञ्च—"स चापि विषमो देहं न कदाचिद्विमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ,"—इत्यादि। ( सु० उत्तर० ३८ अ० ) ॥ १८३—१८५ ॥

सन्ततज्वरमाह—सप्ताहमित्यादि प्राचीनवचनेन। द्वितीया चात्यन्त संयोगे। सप्ताहादिकालं व्याप्य सन्तत्या अनुबन्धेन अविसर्गी अविच्छेदी।

सान्निपातिकवैचित्र्यालिङ्गैर्युक्तश्च दारुणैः ।
स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥१८७॥
विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः ।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥ १८८ ॥

---

## अथ सततक-ज्वरः ।

( Double Quotidian Fever )

अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।
स कृच्छ्रसाध्यो, जीर्णस्तु स कालज्वर उच्यते ॥१८९॥

---

ननु सन्तत्यैत्यनेन गतार्थत्वात् कथ पुनरुक्त—अविसर्गीति ? सत्यम् , विशेषाभिधानार्थं पुनरुक्तम् । विशेषश्च यथा— न केवलमनुबन्धी किन्तु दारुणसन्तापाद्युपलक्षितोऽयं घोररूप सर्वधातुमलावगाही ज्वरः कदाचित् सप्ताहत्रयमपि तिष्ठतीति । उक्तञ्च चरके—"यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः । अनुबन्धन्ति युगपदवश्यं सन्तते ज्वरे ।" इति ( च० चि० ३ अ० ) । नन्वविसर्गित्वेऽपि कथं विषमत्वमिति चेद्—अस्योत्तरं विषमज्वरलक्षणव्याख्यानप्रसङ्गे सम्यक् प्रतिपादितम् । किञ्च कदाचिदादौ अन्येद्युष्करूपेण तृतीयकरूपेण वा प्रवृत्तस्य ज्वरस्य सपदि सन्ततरूपेण पर्य्यवसानदर्शनात् स्पष्टं सन्ततादीनामेकजातीयत्वम् ।

स च सन्ततज्वरः सान्निपातिकवैचित्र्याद् हेतो दारुणैः सान्निपातिकैर्लिङ्गैः मोहप्रलापादिभिरल्पाधिकमात्रैर्युक्त सन् शीघ्रं सप्ताहादिषु कालेषु शाम्यति मारयति वा । उक्तञ्च—"स शुद्धया वाप्यशुद्धया वा रसादीनामशेषतः । सप्ताहादिषु कालेषु प्रशम याति हन्ति वा" इति ( च० चि० ३ अ० ) । विषमत्वञ्चास्यादावस्फुटमपि, काले यथा स्फुटीभवति तदाह चरकीयवचनेन—**विसर्गमिति** । अव्यक्तलक्षणः, "धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते" — इत्यादि पूर्वोक्तदिशा निगूढलिङ्गः । अन्यत् स्पष्टम ॥ १८६—१८७ ॥

सततकज्वरमाह—**अहोरात्र** इति । द्वौ कालावनुवर्त्तते इति कालद्वयान्तः क्वचित सर्वथा मोक्षो भवति, न वा भवति, सन्तापवृद्धिस्तु अहोरात्र द्विर्भवत्येव ॥ १८९ ॥

## सततकभेदः कालज्वरः ।

( Kala-Azar or Leishmaniasis )

यदाऽसौ धातुसंलीनः काले काले पुनर्भवन् ।
अग्नौ मन्दे बले हीने क्षीयमाणस्य देहिनः ॥१६०॥
सपाण्डुशोथवैवर्ण्यः प्लीहोदरयुतो भवेत् ।
दुश्चिकित्स्यतमो घोरस्तदा कालज्वराभिधः ॥१६१॥
विशिष्टं तन्निदानन्तु वृत्तप्राया हि जन्तवः ।
ते सूक्ष्माः प्लीहसन्ध्यस्थि वास्तव्या रक्तदूषणाः ॥१६२॥
उपद्रवौ विशेषेण तत्रातीसरणं क्वचित् ।
घ्राणाद्वा दन्तवेष्टाद्व वा क्वचिद्व रक्तस्रुतिर्मुहुः ॥१६३॥
कोथः कपोलमांसेऽन्तः क्वचित् तत्र च दृश्यते ।
प्राणा वा तत्र मुच्यन्ते रोगो वा तत्र मुच्यते ॥१६४॥

---

सततकभेदमेव सुदारुणं कालज्वराख्यमाह—**यदेति** धातुसंलीनः धातुषु सम्यक् लीनः, असौ सततको नाम विषमज्वरः । काले काले इति अन्तराऽन्तरा परिमुच्य पुनर्द्विरह्नः प्रादुर्भवन् । अतएवास्य दुश्चिकित्स्यता । पाण्डुः पाण्डु-वर्णच्छविः, शोणित--शोणकणिकानां संक्षयात् । शोथः करपादमुखेषु विशेषेण, क्वचिद्व उदरादावपि कालेन भवति । वैवर्ण्यम् श्यामाभवर्णविशेषः । तच्च कालज्वरस्य विशिष्टलक्षणं मन्यन्ते प्रेक्षावन्तः । प्लीहोदरम्—प्रायः सर्वोदर-व्यापिनी प्लीहाभिवृद्धिः । तल्लक्षणञ्च सुश्रुते यथा—"वामे च पार्श्वे परि-वृद्धिमेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डु ॥"—इति ( सु० नि० ७ अ० ) । प्रायेण यकृद्वृद्धिरपि । दुश्चिकित्स्यतमो घोर इति सुनिपुणचिकित्साविरहे नियतप्राणहरत्वात् । विशिष्टं निदानमाह—विशिष्टमित्यादिना । ते च जन्तवः रक्तकणिकानां प्रभवस्थान-स्थिताः स्वप्रभावाद्व रक्तं दूषयन्ति भक्षयन्ति च कणिका —इत्यभिसन्धिः । सोऽयं नवीनसिद्धान्तो बहुपरीक्षासिद्धः । प्रायिकमुपद्रवद्वयमाह—**उपद्रवाविति** । यद्यपि नोभयोरुपद्रवयोः सर्वत्र युगपत् सम्भवः, तथापि तयोरेव प्राधान्याद्व द्विवचनेन निर्देशः । चरमावस्थाया प्रायोभावि लक्षणविशेषमाह कोथ इति । कश्चित् ततोऽपि मुच्यते इति चित्रम् ॥ १६०- १६४ ॥

## अन्येद्युष्क—तृतीयक—चतुर्थकाः ।

( Quotidian Fever, Tertian Fever, Quartan Fever )*

अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्त्तते ।
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥ १६५ ॥
गम्भीरधात्वाश्रयिता त्रयाणाञ्चोत्तरोत्तरम् ।
मृदुर्वा दारुणो वाऽथ द्विधा दृश्यस्तृतीयकः ॥ १६६ ॥

---

अथ क्रमप्राप्तानन्येद्युष्क तृतीयक चतुर्थकज्वरानाह प्राचीनवचनेन—**अन्येद्युष्क** इति । एककालम् एकवारं, नतु तुल्ये काले । एकस्मिन् दिने यस्मिन् काले भवति ज्वरः, अन्यस्मिन् ततः किञ्चित्कालानन्तर किञ्चित्पूर्वं वाऽयातीति नियमस्य प्रायोदर्शनात् । तृतीयकमाह तृतीयक इति । यस्मिन् दिने ज्वरो भवति तत् प्रथमं, ततो गणनया दिनमेकं मध्ये परित्यज्य तृतीये दिने तृतीयको नाम ज्वरः प्रवर्त्तते । एवं मध्ये दिनद्वयं विश्रम्य चतुर्थे दिने यः प्रवर्त्तते स चतुर्थकश्चातुर्थको वा । सर्वपाञ्चैषामादौ रसरक्ताश्रयिणामपि उत्तरोत्तरगम्भीरधात्ववगाहिता स्मर्त्तव्येत्याह गम्भीरेति । उक्तञ्च सुश्रुते—"सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः । मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः । कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्कर मिति (सु० उ० ३६ अ०) । अत्र सन्ततपदं सततकज्वरोपलक्षणम् । धात्वाश्रयनियमश्च प्रायिकगत्या व्याख्येय. । तथाहि—सुश्रुते अन्येद्युष्कस्य मांसाश्रयित्वमुक्त, चरके तु "अन्येद्युष्कं ज्वरं कुर्य्यादपि संश्रित्य शोणितम्"—इति रक्ताश्रयित्वत् (अपिशब्देन मासस्यापि ग्रहणमिति केचित्) । एव तत्रैव "मासस्रोतास्यनुगतो जनयेत्तु तृतीयकम् । संश्रितो मेदसो मार्गं दोषश्चापि चतुर्थकम् ।"—इत्यपि मतभेदः । (च० चि० ३ अ०) । परम् आदौ रसरक्ताश्रयिणो दोपाः क्रमेण उत्तरोत्तरं मासमेदोऽस्थिमज्जशुक्रान्तधात्वभिदूपण कुर्वन्तीति चरकसुश्रुताभ्या भिन्नावस्थाविशेपाः वर्णिता इति सुकर समाधि. । वस्तुतस्तु अवस्थाभेदेनैव हि विपमाणामन्येपां च ज्वराणा क्रमशो रसरथ-रक्तस्थादिदशाः सम्भवन्ति । न तु परमार्थत पृथगेव रसस्थ-रक्तस्थादयो ज्वराः ।

अथ साध्यताभेदेन तृतीयकज्वरस्य चिकित्सोपयोगिभेदद्वयमाह स्वानुभवेन—**मृदुर्वेति** । मृदु स्वल्पलिङ्गः सुखसाध्यश्च, चरकोक्तदिशा मांसान्तधात्वा-

---

* त एते पाश्चात्य मतेन "मलेरिया" ( Malaria ) ज्वरस्य भेदा. ।

कफपित्तात् त्रिकग्राही पृष्ठाद् वातकफात्मकः।
वातपित्ताच्छिरोग्राही दोषभेदाच्च स त्रिधा ॥ १६७॥
चातुर्थकस्तु विरलस्तथा तस्य विपर्य्ययः।
तौ कृच्छ्रसाध्यौ विषमौ रोगसङ्करदौ ज्वरौ ॥ १६८ ॥

---

श्रयणात्। स हि स्वल्पेन कालेन स्वल्पबलेन चोपशाम्यति। दारुणः मूर्च्छाप्रलापादिदारुणलक्षणयुतः कृच्छ्रसाध्यश्च – सुश्रुतोक्तदिशा मेदःपर्यन्तधात्वाश्रयणात्। स चारम्भ एव तुल्यबलैर्भेषजादिभिरुपक्रान्तश्चेत् प्रशाम्यति अन्यथा निहन्त्येवाऽतुर सद्य एव, सन्ततरूपेण वा परिणम्य ॥ १६५—१६६ ॥

अथ तृतीयकस्य चिकित्साविधिप्रभेददर्शनाय दोषोल्वणताऽनुसारि भेदत्रयमाह—**कफपित्तादिति**। त्रिकं नाम श्रोण्यस्थ्नोः त्रिकास्थ्नो सन्धिस्थानं, तद् गृह्णाति रुजतीति त्रिकग्राही। पृष्ठादिति पृष्ठं गृहीत्वा प्रवर्त्तमानः। ल्यब्लोपे पञ्चमी। शिरोग्राही शिरोरुजाकरो विशेषेण। सामान्यशिरोरुजा तु प्रायः सर्वत्र विषमज्वरेषु दृश्या। ननु विषमज्वराणा सान्निपातिकत्वेऽपि कथं दोषद्वयेन निर्द्देशः इति चेत्, दोषद्वयस्य उल्वणत्वप्रदर्शनाय विशेषेणाभिधानम्। तदुक्तं "प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः। सन्निपाते तु यो भूयान् स दोष. परिकीर्त्तितः।" इति (च० चि० ३ अ०)। किञ्च, त्रिकं वातस्थानं, तस्य कथं कफपित्ताभ्यां ग्रहणमित्याद्यपि न शङ्कनीयम्। त्रिकस्थो हि वायुर्यदा कफपित्ताभ्या विगुणीक्रियते तदैव तेन त्रिकग्रहणात्। एवं शिर.स्थः स्वभाविकः श्लेष्मा यदा वातपित्ताभ्यां शोष्यमाणः सज्जति ललाटकोटरादिषु, तदैव विशेषेण शिरोग्रहणमिति दिक्। उक्तच—"कुपितानां हि दोषाणां शरीरे परिधावताम्। यत्र सङ्गः स्ववैगुण्याद् व्याधिस्तत्रोपजायते।"—इति। अनया च दिशा चिकित्साक्रमोऽपि सुगमः। यथा त्रिकग्रहणे विरेचनादिना दोषनिर्हरणम्, पृष्ठग्रहणे वात-कफविलयनाय रूक्षस्वेदादिप्रयोग, शिरोग्रहणे शिरोविरेचनादिप्रयोगः —इत्यादि ॥ १६७ ॥

चातुर्थक ज्वरमाह—**चातुर्थकस्त्विति**। 'दिनद्वयं विश्रम्य यः पुनरेति स चातुर्थकः' इत्युक्तपूर्वम्। स च विरलः, न प्रायो दृष्टः। तद्विपर्ययश्च—"मध्येऽहनी ज्वरयति आदावन्ते च मुञ्चति—" इत्येवंरूपः। स विरलतरः। तौ च विषमौ ज्वरौ रोगसङ्करदौ शीघ्रमेव पाण्डुतीसारशोथकामलादिरोगान्तरैः सङ्कीर्णौ कृच्छ्रसाध्यौ स्तः।

अथ विषमज्वराणां सामान्यलिङ्गानि ।

**प्रायेण स्युस्त्रयो वेगा अन्येद्युष्कादिके ज्वरे**
**तत्राद्यः शीतकम्पाभ्यां त्वचि श्लेष्मानिलोच्छ्रयात् ॥१९९॥**
**द्वितीये तु तृषा दाहः सम्भ्रमो वमथुस्तथा ।**
**विड्भेदो वा क्वचित्—तानि पित्तलिङ्गानि वै विदुः ॥२००॥**
**ज्वरे विमुच्यमाने तु भृशं स्वेदः प्रवर्त्तते ।**
**निद्रा तन्द्राऽवसादश्च सोऽयं वेगस्तृतीयकः ॥२०१॥**

---

स चायं चातुर्थको ज्वरो बहुधा प्रवर्त्तते दोषकोपभेदादिति तद्विस्तरो भगवता हारीतेनोक्तः । यथा—"चातुर्थको नाम गदो दारुणो विषमज्वरः । शोषणः सर्वधातूनां बलवर्णाग्निनाशनः ॥ त्रिदोषजा विकारः स्यादस्थिमज्जगतोऽनिलः । कुपितं पित्तमेवं तु कफश्चैवं स्वकालतः ॥ शीतदाहकरस्तीव्रस्त्रिकालं चानुवर्त्तते । स सन्निपातसम्भूतो विषमो विषमज्वरः ॥ ऊर्द्ध्वकायस्य गृह्णाति यः पूर्वं सोऽनिलात्मकः । पूर्वं गृह्णात्यधःकायं श्लेष्मपूर्वज्वरश्च सः" ॥ इति । रक्षितोद्धृते नागभर्तृतन्त्रे तु इदमधिकं श्रूयते—"मध्यकायं तु गृह्णाति यः पूर्वं स तु पित्तजः"—इति । वस्तुतस्तु सर्वमेतद् दिग्दर्शनपरं मन्तव्यं, चातुर्थकज्वरस्य बहुधा वैचित्र्यदर्शनात् । यत्तु केचित्तृतीयकादिज्वराणामपि विपर्य्ययानाहुः तच्चिन्त्यम्, विचाराऽसहत्वात् । तृतीयकान्येद्युष्कसततकाना विपर्य्यया हि कामं विकल्पिता अपि तृतीयकादिसंज्ञां नातिवर्त्तन्ते—तर्हि किमनेन वृथाविस्तरकल्पनेन ॥१९८॥

ते चैते विषमज्वराः श्रुतिषु 'तक्मन्' संज्ञया निर्द्दिष्टाः । तद्यथा—"नमः शीताय तक्मने नमो रूराय शोचिषे कृणोमि । ये अन्येद्युरुभयेद्युरभ्येति तृतीयकाय नमो अस्तु तक्मने ॥" (अथर्व० १।२५।४)

अथ अन्येद्युष्कादीनां केषाञ्चिद्विषमज्वराणां सामान्यलिङ्गानि स्वानुभवेन वेगत्रये विभज्य वर्णयति शिष्यबुद्धिवैशद्याय—**प्रायेणेति** । प्रायेण भूम्ना, न तु सर्वत्र, अन्यथापि दर्शनात् । अन्येद्युष्कादिके, अन्येद्युष्क-तृतीयक-चातुर्थकादिषु । तेष्वेव वेगत्रयस्य भूम्ना दर्शनात्तन्मुखेन निर्देशः । वस्तुतस्तु नवीनावस्थायां प्रायः सर्वेष्वपि विषमज्वरेषु त्रयो वेगाः सम्भवन्ति, अन्यत्र सन्ततज्वरात् । सन्ततेऽपि दृश्यन्त एव ते क्वचिदादौ । तत्र आद्यः प्रथमो वेगः त्वचि गात्रचर्म्मणि श्लेष्मानिलोच्छ्रयात् कफवातयोरुत्कटप्रकोपात् शीतकम्पाभ्यां प्रवर्त्तते—इति प्रथमवेगस्य साधारणं रूपम् । तत्र हि वायोः केवलस्य सश्लेष्मणो वा सार्वत्रिकप्रकोपः, तेन प्रथमवेगे शिरोहृद्गात्ररुगादीनि सामान्यवातज्वरलिङ्गानि

सर्वे च विषमाः प्रायः पुनरावर्त्तिनो गताः ।
अष्टाहात् पक्षतो वापि क्वचित् कालान्तरेण वा ॥२०२॥

---

वातश्लेष्मज्वरलिङ्गानि वा प्रादुर्भवन्ति। सोऽयं प्रथमवेगो होरामात्रं होराद्वयं वा प्रायस्तिष्ठतीति स्मर्त्तव्यम्। द्वितीय इति। द्वितीये द्वितीयवेगे ते तृषादाहादिसम्भवः। उक्तञ्च—"त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे। तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च"—इति। सम्भ्रमो मनःशरीरयोरस्थिरत्वम्, क्वचिद् भ्रमप्रलापौ च। वमथुर्वमिः, स च द्वितीयवेगस्य समाप्तौ प्रायः इति तस्य चरमो निर्द्देशः। विड्भेदः अतीसारः, स च क्वचिदेव। तान्येतानि पित्तलिङ्गानि विदुर्जानन्ति। विशेषतः पित्तप्रकोपे तु पित्तज्वरलिङ्गानि सर्वाण्यपि सम्भवन्ति। सोऽयं द्वितीयो वेगो याममात्रं सार्धयामं वा तिष्ठति प्रायः। ज्वरे विमुच्यमाने इति तृतीयवेगारम्भः। तदा भृशमतिमात्रं स्वेदः, स्वेदस्नातत्वमिव दृश्यते रोगिणः। सोऽयं वेग यामार्द्धं यामं वा तिष्ठतीति स्मर्त्तव्यम्।

ननु दाहपूर्वोऽपि विषमज्वर सम्भवति, स कथ नोक्त इति चेत्, सत्यम्। दाहपूर्वो ज्वरो विरल एवेति मूले नाभिहितः। प्रादुर्भूतश्चासौ कष्टसाध्यतमो भवति। उक्तञ्च—"द्वावेतौ दाहशीतादौ ज्वरौ संसर्गजौ मतौ। दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च स"- इति।

वाग्भटस्त्वाह—"धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते। ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते। वेपते प्रलपत्युष्णैः शीतैश्चाङ्गैर्हतप्रभः। विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते। सदोषशब्दं च शकृद् द्रवं सृजति वेगवत्।—"इति ( अष्टाङ्ग हृ० नि० २अ० )। सोऽयं तृतीयवेगस्य लक्षणविस्तरः। तत्र च वेपने इत्यस्य दौर्बल्यहेतोरीषत् कम्पोऽङ्गाना वमनादिश्रमेण वा इत्यर्थः, शीताङ्गता च स्वेदकृता। विसंज्ञता वेगवानतीसारश्च क्वचिदेव, न सर्वत्रेत्यपि स्मर्त्तव्यम्॥ १९९—२०१ ॥

अथ विषमज्वराणां पुराणीभूताना लिङ्गविशेषानाह—सर्वे चेति। गताः निवृत्तवेगाः तीव्रौषधादिप्रयोगात् स्वतो वा निवृत्तप्राया.। पुनरावर्त्तिनः, पुनरावर्त्तनशीलाः। कथंकारं पुनरावर्त्तन्त इत्याह--अष्टाहादिति। अष्टाहात् पक्षतो वा अष्टाहं पक्षं वा उल्लंघ्य। ल्यब्लोपे पञ्चमी। क्वचित् कालान्तरेण मासादिना वेत्यनियमः सूचितः। ननु पुनरावर्त्तकज्वरः पृथगेवश्रूयते यथा चरकः—"व्यायामञ्च व्यवायञ्च स्नान चंक्रमणानि च। ज्वरमुक्तो न सेवेत यावन्न बलवान्

यकृत्प्लीहाभिवृद्धिश्च ज्वरे स्याद् जीर्णतां गते
बलाग्निहानिर्दैन्यश्च पाण्डुता शोथ एव च ॥२०३॥

अथ वातबलासक-ज्वरः। ❀

नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥२०४॥
आनूपभूमौ वसतां स च तण्डुलभोजिनाम्
वृक्करोगवतां प्रायो बालानां त्वतिदारुणः ॥२०५॥

---

भवेत् ॥ असञ्जातबलो यस्तु ज्वरमुक्तो निषेवते। वर्ज्यमेतन्नरस्तस्य पुनरावर्त्तते ज्वरः ॥ ( च० चि० ३ अ० ) इति, भेषजं च तत्र किराततिक्तादिकषायं पृथगेवेति चेद् ॥ मैवम् ॥ तीर्थादिप्रतिनिवृत्तो हि पिता पितैव भवति, न पितृव्यः। पुनरावृत्तिश्च मिथ्याहारविहाराद्रोगशेषतो वा विषमज्वरेषु मन्तव्या ॥२०२॥

जीर्णतां गते विषमज्वरे प्रायोभावि रूपमाह—**यकृदिति**। दक्षिणकुक्षिस्थो यकृत्, वामकुक्षिस्थश्च प्लीहा स्वभावतः पर्शुकातोरणान्तः पार्श्वयोः प्रच्छन्नतया तिष्ठतः। तदभिवृद्धिश्च स्पर्शादिवेद्या। अभिवृद्धो यकृत् प्रायेण अङ्गुल्यादिपीडनात्तत्क्षणे यथा रुज्यते,न तथा प्लीहा। स च क्वचिद्रुज्यत एव। अतिपुराणावस्थायान्तु अभिवृद्धिः प्लीहा कठिनीभवती॥ अतिकाठिन्यञ्च तस्य कालज्वरसूचकमित्यवधेयम्। जीर्णता गते पुराणतां प्राप्ते ज्वरे। तदुक्त—"त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः। प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते"—इति। अत्र जीर्णता त्रिसप्ताहव्यतीतता। प्लीहाग्निसादयोस्तु अनुषंगमात्रत्वम्, न लक्षणता। केचित्तु "जीर्णस्त्रयोदशदिवस"—इत्याहुः। बलाग्निहानिर्बलक्षयः अग्निमान्द्यञ्च। अग्निश्च विषमज्वरिणां प्रायेण स्नेहपचनाक्षमः। पाण्डुता शोणितशीणकणिकासंक्षयात्। उक्तञ्च—"अथवा विपरीपाकं धातुष्वेव क्रमान्मलाः। यान्ति ज्वरमकुर्वन्तस्ते तथाप्यपकुर्वते॥ दीनता श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम्। कण्डूरुक्कोठपिडका कुर्वन्त्यग्निञ्च ते मृदुम्"--इति—(च०चि०३अ०) ॥२०३॥

अथ वातबलासकं नाम शोथसहचरं विषमज्वरमाह सौश्रुतवचनेन—**नित्यमिति**। वातबलासको वातबलासकज्वरवान् पुरुषः। बलासो नाम श्लेष्म वातसहितो बलासः सोऽस्यास्तीति वातबलासकः। अर्श आदिभ्योऽच्, बहुव्रीहिर्वा,

---

❀ Fever of Sub-acute or Chronic Nephritis

## अथ प्रलेपक-ज्वरः।

( Hectic Fever )

प्रातर्हीनोऽपराह्णे यः सायं वाऽपि प्रवर्त्तते।
स्वेदैः प्रलिम्पन् गात्राणि सोऽयं ज्ञेयः प्रलेपकः ॥२०६॥
शोषिणां स भवेत् प्रायो विद्रध्यादिवतां तथा।
कफपित्तोल्वणः कष्टो विषमो धातुशोषकृत् ॥२०७॥

---

संज्ञायां कश्च, तत इणिः। सत्यपि सान्निपातिकत्वे वातकफोल्वणत्वादियं संज्ञा। मन्दज्वरः अलक्ष्यप्रायज्वरः। रूक्षः अस्निग्धत्वगादिः। शूनकः ईषच्छून, सर्वाङ्ग शोथी वा। स च शोथ आदौ मुखे शाखासु च, अधःशाखायोरेव वा दृश्यते, क्रमशश्चोर्द्ध्वं प्रसर्पति मध्यकाये इति विशेषोऽस्माभिर्वहुशो दृष्टः। स्तब्धाङ्गः, दुर्बलत्वात् सरुजत्वाद्वाऽङ्गानां प्रक्षेपणेऽसमर्थप्रायः। श्लेष्मभूयिष्ठः मुखप्रसेक-शैत्य-कास-श्वासादिभिरुपद्रुतः, श्लेष्मपूर्णकोष्ठत्वात् प्रायः। अभिवृद्धे तु रोगे फुस्फुसमूलयोरपि सशोथत्वमस्मिन् दृश्यते इति विशेषः। सीदति, हृदयस्य विशेषेण दौर्बल्यादुत्तोरत्तरबलहानेश्च हेतो प्रतिदिनमवसन्नो भवति, कालान्तरेण म्रियते च हृत्-सादात्। सोऽयं वातबलासको नाम ज्वर कुत्र कीदृशपरिणामो भवतीति स्वानुभवं प्रदर्शयति—आनूपभूमाविति स्पष्टम्। स च ज्वरो वृक्करोग-वता प्रायो भवति, वोलाना तु अतिदारुण कृच्छ्रसाध्यः॥ २०४—२०५॥

अथ प्रलेपकं नाम विषमज्वरमाह—**प्रातरिति**। प्रातर्हीनः स्वल्पतरः प्रच्छन्नो वा। अपराह्णे मध्याह्नोत्तरं, सायं सूर्यास्तसमये प्रदोषे वा यः प्रवर्त्तते प्रकर्षेण उत्तरोत्तराभिवृद्ध्या वर्त्तते। किं कुर्वन्? स्वेदः मुहुर्वारंवारं गात्राणि प्रलिम्पन्, पिच्छिलस्वेदजलेन प्रलेपमिव गात्रेषु जनयन्। स च स्वेदः प्रायेण रात्रौ स्नापयतीवातुरम्। ईदृशो यो ज्वरः स प्रलेपको नाम। स केषां भवती-त्याह—शोषिणां राजयक्ष्मणा विद्रध्यादिवता तथा। विद्रधिर्नाम बाह्य आभ्यन्तरो वा गम्भीरो व्रणशोथो यः पच्यमानः सर्वान् धातून् विकरोति। स च यदा बाह्योऽस्थिमांसादिसमाश्रितः, आभ्यन्तरो यकृदादिसमाश्रितो वा शनैः पच्यते, तदा दोषत्रयमुदीरयन् धातुविदाहेन प्रायो ज्वर जनयति। सोऽपि पूर्वोक्तलक्षणसामान्यात् प्रलेपकसंज्ञ एव भवितुमर्हतीति तस्मिन्नन्तर्भाव्यते।

## अथ श्लैपदिक ज्वरः।

( Filarial Fever ).

शाखासु मुष्कयोर्वाऽपि राग-शोथ-रुजाकरः।
पक्षान्ते प्रायशो भावी ज्वरः श्लैपदिकः स्मृतः ॥२०८॥

## अथ औपद्रविकज्वरः।

सर्वेषु जीर्णरोगेषु ग्रहण्यादौ विशेषतः।
दोषत्रये प्रकुपिते स्यादौपद्रविको ज्वरः ॥२०९॥

---

आदिपदेन वीसर्पाणा ग्रहणम्। विषम इत्युक्त्या अत्रापि विषमज्वरसामान्यलिङ्गानि पूर्वोक्तानि शीतदाहादीनि स्वल्पाधिकानि भवन्तीत्युन्नेयम्। कष्टः कष्टप्रद। ननु सुश्रुतेनोक्तं—"तथा प्रलेपको ज्ञेयः शोषिणा प्राणनाशनः"—इति, तत् कथं विद्रध्यादिष्वपि स एव ज्वरोऽभिधीयते—इति चेत्। सत्यम्। शोषिणामेव प्रायः प्राणनाशनोऽयं ज्वरो नित्यं प्रवर्त्तमान., नत्वन्येषामित्याचार्याणामभिप्रायः। विद्रध्यादिवता तु शस्त्रचिकित्सया सुसाध्योऽयम्। अथवा—शोष इति पदं धातुशोषणरोगसामान्यपरं व्याख्येयम्। एष च ज्वर. शोषादीनामनुबन्धरूप एव, न स्वतन्त्रः—इत्यपि समत्तव्यम् ॥ २०६—२०७ ॥

अथ श्लैपदिकं नाम ज्वरमाह—**शाखास्विति**। शाखायामूर्द्ध्वशाखाया मधःशाखाया वा, तत्रापि कचित् कर प्रकोष्ठयोः पाद-जङ्घयोर्वा, कक्षा-वंक्षण-ग्रन्थिषु वा कुत्रापि। मुष्कयोर्वृषणयो., तत्कोषीयत्वं च तु विशेषात्। रागो रक्तता विदाहः, शोथ. शूनता, रुजा पीड़ा, तासां कर। पक्षान्ते दर्शपौर्णमास्योः। प्रायशोभावीत्युक्ते कदाचिदेकादश्यादिष्वपि प्रादुर्भवत्येष ज्वरः—इत्यभिप्राय। सोऽयं कफोल्बणो विषमज्वर. पूर्वोक्तै· शीतकम्पादिसामान्यलिङ्गैः सम्भवति, प्रायेण स्फुटाऽस्फुट पाद-मुष्कादिशोथस्य अनुबन्धरूपः। आनूपादिभूमिजश्चायं रोगः श्लीपदो नामेति वक्ष्यते। उक्तं च सुश्रुते—"त्रीण्यप्येतानि जायन्ते श्लीपदानि कफोच्छ्रयात्। गुरुत्वं च महत्त्वञ्च यस्मान्नास्ति विना कफात्। पुराणोदक-भूयिष्ठा सर्वर्त्तुषु च शीतला। ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः।" इति ( सु० निदान० १२ अ० )। अस्य च रोगस्य रस-रक्तजकृमिकृतत्वादितत्त्वं लिङ्गादीनि च यथास्थानं वक्ष्यन्ते ॥ २०८ ॥

अथ औपद्रविकं नाम विषमज्वरमाह—**सर्वेष्विति**। जीर्णरोगेषु चिरानु-

## अथ देशान्तरीयज्वरा:।

**देशान्तरेषु दृश्यन्ते शोण-हारिद्रकादयः।**
**ज्वराः केचित् प्रविरलाः, चिन्त्यन्ते नेह तेऽधुना ॥२१०॥**

---

वन्निग्रषु रोगेषु सर्वेष्वपि, विशेषतस्तु ग्रहण्यादिषु। दोषत्रये वातादौ प्रकुपिते प्रकर्षेण कुपिते सति। औपद्रविको नाम उपद्रवत्वेन सम्भूतः। सोऽयं ज्वरः क्षयादीनामिव नादित एवानुबन्धभूतः, किन्तु कालक्रमेण प्रादुर्भूतः उपद्रवसंज्ञः—इत्यभिसन्धि। तथाप्रादुर्भूतस्य चास्य विषमारम्भक्रियाकालत्वेन विषमज्वर-सामान्यदर्शनात् विषमज्वरेष्वन्तर्भावः। कालान्तरेऽपि नियमेनानुषङ्गी च स तत्त-द्रोगाणां कृच्छ्रसाध्यत्वमसाध्यत्वं वा ख्यापयति प्रायः। तद्दृष्टान्ताः यथा ग्रहण्यती-सारयोः—"श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम्। विशेषेण नरं वृद्धमतीसारो विनाशयेत्"। इति। पाण्डुरोगे—"ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः। पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः"—इति। अर्शःसु—"हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग् ज्वरः। तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम्"। इति दिक्।

यत्तूक्तं सुश्रुते—"रोगाणान्तु समुत्थानाद् विदाहागन्तुतस्तथा। ज्वरोऽपरः सम्भवति तैस्तैरन्यैश्च हेतुभिः"—इति, तस्यायमर्थः। रोगाणां नवीनानां पुराणानां वा सम्यगुत्थानादुत्कटतया प्रादुर्भावात्, विदाहतः पच्यमानविद्रध्यादिहेतोः, आगन्तोर्वृश्चिक मूषिक-दशनादेश्च निमित्तात् तैस्तैः प्रसिद्धैर्हेतुभिः, अन्यैरपरैश्च क्षयादिभिः, अपरः उक्तेभ्योऽन्यो ज्वरः सम्भवति। एवं च पूर्वोक्तश्लैपदिकादिज्वराः इतरसंहितासु स्पष्टमनुक्ता अपि सुश्रुतोक्तनयेन सूचिता एव मन्तव्याः॥ २०९॥

अथ देशान्तरीयज्वरानद्यापि भारते दुर्लभानुद्दिशति—**देशान्तरेष्विति।**

देशान्तरेषु भारतातिरिक्तदेशेषु। शोणज्वरो[१] नाम सपदि सर्वकायस्य शोणवर्णप्रदो ज्वरविशेषः। हारिद्रकः[२] शरीरस्य हरिद्रवर्णप्रदः। स च हारिद्रकज्वरः कदाचिद् भारतेऽप्यासीदिति क्वचिद्वर्णितोऽपि इदानीन्तु देशान्तरमात्रे प्रसिद्धाः। प्रविरलाः दुर्लभाः। अत एव हेतोरिदानीमसम्भवात् ते नेह चिन्त्यन्ते लिङ्गादि-वर्णनेन, निष्प्रयोजनत्वात्। तल्लिङ्गादीनि तु पाश्चात्यचिकित्साशास्त्रेषु स्फुटं वर्णितानि॥ २१०॥

---

१ Scarlet Fever २ Yellow Fever.

## अथ ज्वरावस्थाविशेषाः ।

### धात्वाश्रयभेदेन ।

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥२१०॥
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ।
प्रलापः पिडकास्तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥२११॥
पिण्डकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ।
ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥२१२॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चाऽसहिष्णुता ॥२१३॥

---

सर्वेषामेव ज्वराणामवस्थाभेदेन उत्तरोत्तरगम्भीरधात्वाश्रयणाद् यानि यानि लिङ्गानि सम्भवन्ति तानि पुनर्विशिष्य वर्णयति गुरुतेति । सुश्रुतेऽप्युक्तं—"वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा । तथा तेषां भिषग् ब्रूयाद् रसादिष्वपि बुद्धिमान्"—इति (सु० उत्त० ३८ अ०) । अस्य ह्ययमभिसन्धिः । ज्वराणां लक्षणं यथा दोषक्रमेण विचार्य्यते तथा रस-रक्ताद्याश्रयणक्रमेणापि विचार्यम्, तत्तल्लिङ्गसमुद्भवे तत्तद्धात्वाश्रयणाभिज्ञानादिति । तद्विज्ञानप्रयोजनं च पूर्वोक्तज्वराणां धात्वाश्रयिताज्ञानेन साध्यासाध्यत्वविवेकः चिकित्सापथनिरूपणञ्चेति । गुरुता सर्वकायस्य गौरवम् । हृदयोत्क्लेशः हृदुपलक्षितदेशस्य अर्थादामाशयस्य उत्कटसङ्कोचः क्षणे क्षणे विवमिषाजनकः । सदनमवसादः । छर्द्दिर्वमिः कफादेः । अरोचकः अन्नस्याऽनभिनन्दनम् । लिङ्गमित्येकवचननिर्द्देशात् उक्तलक्षणानि सर्वाणि बहूनि वा युगपद् यथा रसस्थज्वरं सूचयन्ति, न तु एकैकलिङ्गं पृथगपि तथेत्यर्थोऽवसेयः । एवमग्रेऽपि बोध्यम् । दैन्यं, निःसहायतानुभवः । मोहः प्रमूढत्वं न तु मूर्च्छा । विभ्रमः, चित्तस्य व्याकुलीभावः । पिडकाः सर्वाङ्गेषु, क्वचिदेकाङ्गे वा । पिण्डिकोद्वेष्टनं, जङ्घापश्चिमस्थानापिण्डिकाख्यपेशीनां वस्त्रनिष्पीडनवत् पीड़नानुभवः । सृष्टमूत्रपुरीषता, मलमूत्रयोः क्षणे क्षणे प्रवृत्तिः । ऊष्मा, सन्तापाधिक्यं । विक्षेपः, अङ्गानां मुहुर्मुहुः प्रचालनम्, सर्वाङ्गपेशीनामुद्वेष्टनात् । अथ मेदःप्राप्तज्वरे लिङ्गम्—भृशं स्वेद इत्यादि । स्वेदबाहुल्यञ्च मेदोधातोर्ज्वरोष्मणा पच्यमानत्वात् । उक्तञ्च—"मूलः स्वेदस्तु

भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च।
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥२१४॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा।
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥२१५॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥२१६॥

---

मेदसः" इति। एवञ्च प्रलेपकादिज्वरे यदा यदा विशेषेण मेदःक्षयस्तदा तदा स्वेदबाहुल्यम्। सन्ततज्वरे तु रसरक्तस्थे भूरिस्वेदागमो दुर्लभः। असहिष्णुता—आलोकशब्दादीनां सहनाऽशक्तिः, निरन्तरचाञ्चल्यं वा ॥ २१०—२१३ ॥

भेदोऽस्थ्नामिति। अस्थ्नां भेदो निर्भेदनवद् रुजाविशेषः। कूजनं मुहुर्मुहुः कातरताव्यञ्जको ध्वनिः। श्वासो द्रुतश्वसनम्। तमःप्रवेशनं किञ्चिन्मात्रश्रमेऽपि अन्धकारदर्शनम्। कासः शुष्ककासः। महाश्वासः—उच्चैः श्वासो यो दूरादपि दृश्यते, न तु मरणप्रदो महाश्वासः। अन्यथा "महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते"—इत्युक्तेर्मज्जागतज्वरस्य सर्वथैव असाध्यता प्रसज्येत। मर्मसु हृदयादिषु च्छेदवत् पीड़ा। तान्येतानि अस्थि-मज्जगतज्वरलिङ्गानि चातुर्थकज्वरे यक्ष्मादौ च अवस्थाविशेषेषु लक्ष्यन्ते। शेफस इति। शुक्रस्थानगते शुक्रस्थानं प्राप्ते। किन्तावत् शुक्रस्थानं?—वृषणौ, पौरुषग्रन्थिः, शुक्रवहे स्रोतसी, शुक्रप्रपे, शेफश्चेति। * अस्ति च सर्वशरीरचरंसूक्ष्मं शुक्रमपरं यत् पौंस्त्वचिह्नं श्मश्रुलत्वादि सम्पादयति, तदपेक्षया तु सर्वशरीरमेव शुक्रस्थानं सामान्येन। यत्तूक्तं रक्षितेन—"शुक्रस्य सर्वशरीरगतत्वेन शुक्रस्थानाऽसम्भवादिति", तन् शवच्छेदादिपुरस्कृतशारीरज्ञानाऽभावनिमित्तम्। "यथा पयसि सर्पिस्तु"—इत्यादि प्राचीनवचनस्तु सर्वदेहचर सूक्ष्मशुक्रसारपरम्, न हि तावता प्रत्यक्षदृष्टं शुक्रस्थानं वार्य्यते। उक्तञ्च चरकेऽपि—"शुक्रवहानां स्रोतसां वृषणौ मूलं शेफश्च"—इति (चरक० चि० ५ अ०) शेफसः स्तब्धता चिरानुबन्धो शिश्नप्रहर्षः। शुक्रस्य मोक्षः, मुहुर्मुहुः क्षरणम्। विशेषतः—इत्युक्तेः शुक्रस्य क्षरणेऽपि शिश्नप्रहर्षो नापयातीति वैचित्र्यमुन्नेयम्। सोऽयं शुक्रगो ज्वरः सुषुम्नाकाण्डाभिघाते, आलर्कविषस्य चरमावस्थायाञ्च दृश्यते ॥ २१४—२१६ ॥

---

* तदेतदखिलमस्मदीये प्रत्यक्षशारीरे स्पष्टम्।

रसरक्ताश्रितः साध्यो मेदोमांसगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थस्तु न सिध्यति ॥२१७॥

वेगभेदेन भेदद्वयम् ।

ज्वराणां वेगभेदेन भेदद्वयमथ त्र वे ।
अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥२१८॥
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ।
अन्तर्वेगस्य लिङ्गानि, सोऽयं गम्भीर उच्यते ॥२१९॥
सन्तापोऽह्यधिको वाह्यस्तृष्णादीनां च मार्दवम् ।
वहिर्वेगस्य लिङ्गानि सुखसाध्यश्च स स्मृतः ॥२२०॥

---

अथ रसस्थ-रक्तस्थत्वादिपरिज्ञानेन साध्यासाध्यतां विविनक्ति चरकीयवचनेन—**रसरक्तेति** । तत्र प्रायेण सर्व एव ज्वरो रसस्थः, सामावस्थायाम् । सन्ततज्वरस्तु रसरक्तस्थः । तदुक्तं—"सन्ततं रस रक्तस्थ"—इति । अपरेऽपि सान्निपातिकज्वराः रसरक्तस्था एव प्रायः, मांसमेदःस्था वा कालेन धातुपाकारम्भात् । उत्तरोत्तरगम्भीरधात्यवगाहिता तु विषमज्वराणामेव विशेषात् । अस्थिमज्जगतः कृच्छ्रः कष्टसाध्य., नत्वसाध्य । शुक्रस्थस्तु असाध्य एव ॥ २१७ ॥

ज्वराणा धात्वाश्रयकृतानि लिङ्गान्युक्त्वा तन्मूलक स्पष्टतर भेदद्वयमाह—**ज्वराणामिति** । वेगभेदेन ज्वरवेगस्य वाह्याभ्यन्तरताभेदेन । अन्तर्दाहो वहिर्ज्वरालपत्वेऽपि तीव्रोऽन्तःसन्ताप' । अस्वेदः, स्वेदस्य सर्वथैव अप्रवृत्तिरीपत्प्रवृत्तिर्वा । दोषवर्चोविनिग्रहः, दोषाणा वर्चसो मलस्य च अवरोधः । सोऽयं गम्भीर इति कथ्यते, तुल्यलक्षणत्वात् । तथाहि पठ्यते—"गम्भीरो हि ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया । आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च"—इति ( सु० उत्तर० ३९ अ० ) आनद्धत्व च दोषवर्चोविनिग्रह एव । गम्भीरत्वञ्च मांसादिगम्भीरधातुप्रविष्टत्वम् तस्मात् यो हि ज्वरश्चरकेऽन्तर्वेग इति पठ्यते स एव सुश्रुते गम्भीर इति । ननु गम्भीरोऽयं ज्वर कतमधात्ववगाही ? न हि रसरक्तग., तल्लिङ्गासम्भवात् । न च तावन्मांसगः, मासगे सृष्टमूत्रपुरीषतादर्शनात् । नापि मेदोगः, तत्र भृश स्वेदसम्भवात् । नाप्यस्थिग., अस्थिगे विरेकच्छर्द्योर्दर्शनादिति । उच्यते । आमसम्पर्केण किञ्चिद् वैलक्षण्यं मासगादिज्वरेषु दृश्यते, न तु

आमासम्पर्केण भेदत्रयम्।

लालाप्रसेको हृल्लास-हृदयाशुद्ध्यरोचकाः।
तन्द्राऽलस्याऽविपाकास्य-वैरस्यं गौरविट्कता ॥२२१॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः।
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ॥२२२॥

---

परमार्थतो भेदः। सादृश्यं त्वस्य मांसमेदोऽस्थिगैः सर्वैरपि ज्वरैः स्फुटमेव, इतर-लक्षणसाम्यदर्शनात्। तथा चोन्नीयते गम्भीरधात्वनुगोऽयं ज्वरो गम्भीरो नामेति। बहिर्वेगस्य लिङ्गान्याह—सन्तापोऽधिक इत्यादि। बाह्यस्त्वाद्यः। सोऽयं ज्वरो रसरक्तस्थ इत्युन्नेयम्। स च सुखसाध्य इत्युक्ते गम्भीरज्वरो दुःखसाध्योऽसाध्यो वेत्यवगम्यते॥ २१७ - २२०॥

अथ ज्वराणां चिकित्साभेदप्रदर्शनाय आमसम्पक्वकृतमवस्थाभेदत्रयमाह प्राचां वचनैः—लालाप्रसेक इति। आमलक्षणं चोक्तं यथा "ऊष्मणोऽल्प-बलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगतं रसमामं प्रचक्षते"—इति। स हि रसधातुरसम्यक्परिणतः सर्वकाये रक्तेन मिश्रीभूय सञ्चरन् वैकृतविशेषयुतां ज्वरावस्थां जनयति, सोऽयमामज्वरो नाम। लालाप्रसेकः, मुखे भूरिलालोद्गमः। हृल्लासः, आमाशये पिच्छिलश्लेष्मबाहुल्यादुपस्थितवमनत्वम्। हृदयाशुद्धिः, हृदयोपलक्षितदेशस्य आमाशयस्येति यावत्, अशुद्धिरशून्यता, पूर्णतानुभवः। अविपाकः अभुक्तस्यापि अजीर्णलक्षणानुबन्धः। आस्य-वैरस्यं, मुखस्य विकृतरसता मुखमाधुर्य्यादि, विगतरसता वा। स्तब्धता, अन्त्रादीनां वातपूर्णता, वायोरानु-लोम्याभावात्। ज्वरश्च बलवानधिकसन्तापः, आमसम्पर्केण लब्धबलत्वात्। न दद्यात्तत्र भेषजमिति तु चिकित्सापथमिङ्गितेन प्रदर्शयत्याचार्यः। भेषजमिति चात्र मुख्यकषायपरम्, तस्य मात्राबाहुल्येन गुरुतया च दुर्जरत्वात्। लघुभेषजं हि षडङ्गपानीयादि, स्वल्पमात्रं रसौषधं च आमापाचनाय प्रदत्तं नैतेन वार्य्यते, तद्वि-धान दर्शनाद् वृद्धवैद्यव्यवहाराच्च। आमपरिपाकश्च सप्ताहेन षड्हेन वा भवति प्रायः, क्वचित् स्वल्पतरकालेन वा दोषाल्पत्वाद् लङ्घनादिप्रभावाद् वा। तदुक्तं—"सप्ताहेनैव पच्यन्ते दोषधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमे-ऽहनि"—इति (च० चि० ३ अ०)। अन्यच्च—"पैत्तिके वा ज्वरे देयमल्पकाल-समुत्थिते। अचिरज्वरितस्यापि भैषज्यं दोषपाकतः"—इति (सु० उत्तर० ३ अ०)।

यत्तु केचिदमुमेव सप्ताहेनैवेत्यादि वचनं व्याचक्षाणा द्विविधां सामतां

ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥२२३॥
क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥२२४॥

---

कल्पयन्तोऽश्रुतपूर्वमर्थमस्मादेवाकर्षन्ति, उपदिशन्ति च—"रससामता तु अष्टाहात् परतोऽप्यनुवर्त्तते"—इति, तद्वृथाऽग्रहमूलम्, प्राचां विरुद्धं च। उक्तवचने हि प्राय इत्युक्तेः क्वचित् सप्ताहात् परतोऽपि सामतानुवृत्तिरित्यर्थः सुवचः। नत्वनेन द्विविधा सामता-एका रसस्य, अपरा दोषस्य इत्यर्थः कथमपि प्रतिपाद्यते। रस एव ह्यविपक्व आमसंज्ञां लभते, तत् केयं रससामतेति शशविषाणकल्पना? वस्तुतस्तु सामता दोषाणामेव, ज्वरादीनां च उपचारात्। सा च सप्ताहेनापैति प्राय इति प्राचामुपदेशः। यत्र तु सप्ताहात् परतोऽपि दोषाणां सामताऽवशिष्यते, तत्र पाचनमन्यथा शमनमौषधं दीयते—इति सुभिषजां सिद्धान्तः ॥ २२१—२२२।

पच्यमानज्वरस्य लक्षणमाह—ज्वरवेग इति। ननु ज्वरो हि व्याधिः, स कथं पच्यते—इति चेत्, सत्यम्। दोषाणामेव सामानां पच्यमानता ज्वरे उपचर्यते इत्यदोषः। मलप्रवृत्तिः विण्मूत्रस्वेदादीनां सम्यक् प्रवृत्तिः। उत्क्लेशो विवमिषा ॥२२३॥

निरामज्वरलक्षणम्—क्षुत्क्षामतेति। क्षुत्क्षामता क्षुधया कातरत्वम्। क्षुदित्युपलक्षणम्। पिपासाया अपि तदानीं दर्शनात्। यदुक्तं—"क्षुत्पिपासाऽसहोदये"—इति। सम्यक्कृते हि लङ्घने सामताऽपगमात् क्षुत्पिपासयोरसह्ययोरुदयः प्रसिद्धः। गात्राणां लघुत्वं सर्वकायस्य गौरवापगमः, शून्यताऽनुभवो वा। ज्वरमार्दवं सन्तापाल्पत्वम्। दोषप्रवृत्तिः मलमूलदोषाणां मलभूतपित्तकफयोर्वा सुखेन वहिः प्रवृत्तिः, यद्वा दोषाणां वातादीनां स्वाधिकारेषु स्वाभाविकी प्रवृत्तिः। अष्टाहः, दिनाष्टकम्। ननु नेदं लिङ्गम्, न च अष्टाहेन शुद्धिरिति नियमः—इति चेत्। सत्यम्। लक्ष्यतेऽनेनेति लक्षणमिति व्युत्पत्त्या कालोऽपि लक्षणम्। अष्टाहेन सामतापगमश्च प्रायिकः। तावान् हि कालः कृतलङ्घनस्य लघुभुञ्जानस्य वा सामतापगमाय कल्पते प्रायः, न तु यथेष्टं भुञ्जानस्यापि। अत एव वाग्भटः—"सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे। निरामे शमनं स्तब्धे सामे नौषधमाचरेत्"—इति। अस्य ह्ययमर्थः। सप्ताहात् परतः सामता निरामता च उभयमपि सम्भवति। तत्र यदा अकृतलङ्घनादेः पुरुषस्य स्तब्धता

ऋतुभेदेन भेदद्वयम्।

**कालप्रकृतिमुद्दिश्य प्रोच्यते प्राकृतो ज्वरः।**
**वर्षा-शरद्-वसन्तेषु वाताद्यैः प्राकृतः क्रमात्॥**
**वैकृतोऽन्यः, स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात्।**
**प्राकृतः सुखसाध्यस्तु वसन्त-शरदुद्भवः॥२२५।२२६॥**

---

मलाना दृश्यते सप्ताहात् परतोऽपि, तत्र निरामतैव सम्पादनीया लङ्घन[1] वालुकास्वेदादिना, न तु मुख्यभेषजं कषायादि प्रदेयम्। यत्र तु स्तब्धता नास्ति, सामताऽवशिष्यते, तत्र आमपाचनं कषायादिकं दीयत एव। यत्र तु सर्वथाऽपगत सामता, तत्र शमन ज्वरघ्नौषधादि दीयत इति दिक्।

केचित्तु "ज्वरितं षडहेऽतीते"—इति चरकीयवचनेन सह "सप्तारात्रात् परमिति"—सौश्रुतवचनं संगमय्य बहुधा वादानुपन्यस्य कष्टकल्पनया तुल्यार्थमाविष्कृत्य समादधते। तन्नातिमनोरमम्, उभयथाऽपि सम्भवात्; मतभेददर्शनाच्च। तथाहि क्वचित् षडहेन, क्वचित् सप्ताहेन, क्वचिदष्टाहेन, क्वापि दशाहेन वा सामतापगमो दृष्टः। मुख्यभेजव्यवस्थाकालमधिकृत्य च दृश्यत एव मतभेद आचार्य्याणाम्। तथाचोक्तं वाग्भटेन—"सप्ताहादौषध केचिदाहुरन्ये दशाहत."—इति। एवं चातुरावस्थादर्शनेनैव सामतादि निर्णीयते भेषजकालश्च, न पुनर्दिनगणनामात्रेणेति सिद्धान्त.॥२२४॥

अथ प्राकृत-वैकृतभेदेन संज्ञाद्वयं साध्यासाध्यता च विविनक्ति प्राचां वचनैः—

**कालप्रकृतीत्यादि।** कालो वर्षादिः। तस्य प्रकृतिर्वातादिप्रकोपनत्वम्। तामुद्दिश्य, तदनुसारेण। तद्दृष्टान्तानाह—**वर्षेत्यादि।** क्रमाद्, यथा वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते श्लैष्मिकः। तथाच प्राकृतः प्राकृतसंज्ञः। अन्यः कालप्रकृतिवैपरीत्येन जातो वैकृतः, वैकृतसंज्ञः। विकृतस्य भावो वैकृत, तदस्यास्तीति वैकृतः। अश आदिभ्योऽच्। स दुःसाध्यः, दुःखसाध्यः। स्वाभाविकदोषकोपातिरिक्ताऽपरदोषकोपसाङ्कर्य्यात्। किञ्च अनिलाद् वायोर्जातः प्राकृताख्यो यो ज्वरा वार्षिकः, स च प्रायो (न तु नियमेन) दुःखसाध्यः। प्रायेणेतिः तथाविध दोषसाङ्कर्य्यात्, कायाग्निदौर्बल्यात्, प्रायो लङ्घनाऽसहिष्णुत्वाच्च। तदुक्तम्—"आदानदुर्बले देहे पक्ता भवति दुर्बलः। स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः॥" इति। 'भूवाष्पान्मेघनिःष्यन्दात् पाकादम्लाज्जलस्य च वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥" इति च (च० सूत्र० ६ अ०)। इतर—

---

[1] अत्र लघन नाऽनशनमन्यत्र सान्निपातिकज्वरात्। लघुभोजनमपि लङ्घनमेव।

प्राकृतयोः सुखसाध्यत्वमाह प्राकृत, इति। स्पष्टम्। तत्र च हेतुरेकदोषजत्वं लङ्घनासहिष्णुत्वञ्च। उक्तञ्च—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति।

इदञ्चात्राऽवधेयम्। द्विविधः खल्विह दृश्यते प्राचामृतुविभागो—वर्षप्रधान शीतप्रधानश्चेति। तत्र षड्तवो वर्षा-शरद्-हेमन्त-वसन्त-ग्रीष्म-प्रावृषः—इति वर्षप्रधानो विभाग.। वर्षा शरद्-हेमन्त-शिशिर-वसन्त-ग्रीष्माः—इति शीतप्रधानो विभागः। तयोराद्यस्य प्राधान्य सुश्रुतेऽभिहित, द्वितीयस्य चरके उपदेशस्थान[1]भेदात्। तथाहि सुश्रुत.—'इह तु वर्षा-शरद्-हेमन्त-वसन्त-ग्रीष्म प्रावृष इति षड्तवो भवन्ति दोषोपचय-प्रकोपोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा—भाद्रपदाश्वयुजौ वर्षा, कार्तिकमार्गशीर्षौ शरत् पौषमाघौ हेमन्तः, फाल्गुनचैत्रौ वसन्त., वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृडिति।" (सु० सूत्र० ६ अ०)। चरके तूक्तम्--"इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्। तत्रादित्यस्योदगयनमादानञ्च त्रीनृतून् शिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्। वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गञ्च।" इति (च० सूत्र० ६ अ०)। अत्रादानमादानकालः, विसर्गो विसर्गकालः। ऋतुगणना च चरके माघादारभ्य शिशिरर्त्तुमुखेनेति विशेषः। ईदृश ऋतुविभागभेदस्य हेतुश्च काश्यपेनोक्तः—"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे। तेन प्रावृष-वर्षाख्यौ ऋतू तत्र प्रकल्पितौ। गङ्गाया-उत्तरे कूले हिमवज्जलसङ्गमे। भूयः शीतमतस्तेषा हेमन्तशिशिरावृतू।" इति। आचार्य्यभावमिश्रोऽप्याह—"गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः। उभौ मुनिभिराख्यातौ प्रवृड्वर्षाभिधावृतू। तस्या एवोत्तरे देशे हिमप्रचुरभावत। एतावुभौ समाख्यातौ हेमन्तशिशिरावृतू।" इति। इदञ्चाखिल भारतवर्षविषयम्। इतरदेशेषु तु क्वचिद्धिमप्रधानता, क्वचिदुष्णप्रधानता वा, तेन तत्र तत्र शीतोष्णवर्षलक्षणोऽन्यविधः कालविभागो दृष्टः। तत्र च दोषोपचयप्रकोपोपशमाः कायस्वालक्षण्येन वेदितव्याः।

इद च वर्षप्रधानमृतुविभागमुद्दिश्य शार्ङ्गधराचार्य्यस्य संग्रहवचनम्—"ग्रीष्मे सञ्चीयते वायु प्रावृट्काले प्रकुप्यति। वर्षासु चीयते पित्तं शरत्काले प्रकुप्यति। हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति। प्रायेण प्रशमं याति स्वयमेव समीरणः। शरत्काले, वसन्ते च पित्तं, प्रवृड्तौ कफ.॥" इति।

ननु वर्षासु वायुः कुप्यतीति श्रुयते तदिह कथमुक्तं वर्षासु चीयते पित्तमिति चेत्, श्रुणु। वर्षप्रधानविभागे वर्षापदं प्रावृट्परम्। अथवा वर्षासु वात-

---

१। सुश्रुतेन हि धन्वन्तरिवचनमुपनिबद्धम्। धन्वन्तरिश्च काश्यामुपदिदेश। तत्र वर्षप्रधाना ऋतव। अग्निवेशोपदेशस्तु पाञ्चालभूमौ बभूव, तत्र शीतप्रधाना ऋतव।

ज्वरमोक्षस्य द्वैविध्यम्।

द्विविधो ज्वरमोक्षः स्याद् दारुणोऽदारुणस्तथा।
दारुणस्तीव्रसंक्षोभात् स्वेदमात्रादृदारुणः ॥२२७॥
बहुदोषस्य बलवान् प्रायेणाऽभिनवो ज्वरः।
स क्रिया-दोषपक्त्या चेद् विमुञ्चति सुदारुणम् ॥२२८॥

---

प्रकोपोऽनुवर्त्तत एव स्वलक्षणसामान्यात्, पित्तञ्च सञ्चीयते अन्तराऽन्तरा घर्माधिक्यात्, कफश्च स्तोकेन शीतवातारब्धुसस्पर्कात्। तथाह्युक्तं—"वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादय.।" इति (च० सू० ६ अ०)। शीतप्रधानविभागे तु ग्रीष्मे सञ्चितो वायु. कुप्यति वर्षास्वेव, सञ्चीयते च पीत्तमग्रे शरदि कोपाय, श्लेष्मा च स्तोकेन पूर्वोक्तहेतोः। स च कफः शरदि पित्तप्रभावेन शुष्यमाणोऽपि पुनः सञ्चीयते प्रचुरतर हेमन्तशिशिरयोः, कुप्यति च भृशं वसन्ते। एवञ्च वर्षप्रधान देशेषु प्राबल्य वातप्रधानरोगाणां शीतज्वरादीनाम्, शीतप्रधानदेशेषु तु श्लेष्मप्रधानरोगाणां श्वसनकज्वरादीनामित्यपि समुन्नेयम् ॥ २२५—२२६ ॥

अथ ज्वरमोक्षस्य प्रकारद्वय दर्शयति चरकीयवचनैः—द्विविध इत्यादि। दारुणः अकस्मात् प्रवृत्तः, यथा केषुचित् सान्निपातिकज्वरेषु सप्तमादिदिनेषु प्रचुरस्वेदोद्गमादिना। अदारुणः शनैः शनैः प्रवृत्त.। तत्र दारुणो ज्वरमोक्षः, तीव्रसक्षोभात्, तीव्रसंक्षोभं पुरस्कृत्य प्रवर्त्तते। अदारुणस्तु स्वेदमात्रात् स्वेदमात्रं पुरस्कृत्य, विनैव सक्षोभादित्यर्थः। तीव्रसंक्षोभश्च भूयिष्ठस्वेद-मोह-दारुणदौर्बल्यादिरूपः। तद्दृष्टान्तश्च यथा श्वसनकज्वरे दर्शित.—"सप्तमे दिवसे प्रायश्चाष्टमे नवमे तथा। अकस्माज् ज्वरनिर्मुक्तिः स्वेदप्राचुर्य्यमेव च। प्राणा वा तत्र मुच्यन्ते रोगी वा तत्र मुच्यते॥" इत्यादि। यच्चोक्तम्—"सप्तमी द्विगुणा चैव नवम्येकादशी तथा। एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च"— इति, तदपि दारुणज्वरमोक्षाभिप्रायेणैव। किञ्च विषमज्वराणामपि त्रैदोषिकत्वात् कदाचिद् दारुणो मोक्षः, यथा तृतीयकादिषु प्राय.। उक्तञ्च —"ज्वरप्रमोक्षे पुरुष. कूजन् वमति चेष्टते। श्वसन् विवर्ण स्विन्नाङ्गो वेपते लोयते मुहुः।" इत्यादि (च० चि० ३ अ०) ॥२२७—२२८॥

दारुणज्वरमोक्षस्य हेतुमुद्दिशति—बहुदोषस्येति। बहुदोषस्य तीव्रोद्रिक्त दोषस्य आतुरस्य। अभिनवो नवीनः, न तु जीर्णः। बलवान् तीव्रसन्तापादियुत तादृशज्वरः। क्रियादषोपक्तया—क्रिया सद्योज्वरा हं कर्म स्वेदन-विरेचनादि, तथा।

---

१। दारुणमोक्ष.—Crisis २। अदारुणमोक्ष —Lysis

कृत्वा दोषवशाद्वेगं क्रमादुपरमन्ति ये।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥२२६॥

विज्वरलक्षणम्।

विगतक्लमसन्तापमव्यथं विमलेन्द्रियम्।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥२३०॥

---

दोषपक्त्या स्वतो दोषपाकेन वा हेतुना, चेद् यदि विमुञ्चति, तर्हि सुदारुणं यथा तथा विमुञ्चति प्रायेण।

अदारुणो मोक्षः कदा भवतीत्याह,—कृत्वेति। दोषवशाद् दोषस्वभावमाश्रित्य वेगं सन्तापादि कृत्वा ये क्रमादुपरमन्ति शनैर्विरमन्ति, तेषां चिरकारिणां दीर्घकालव्यापिनां ज्वराणां मोक्षः अदारुणः। ईदृशश्च ज्वरमोक्षः पूर्वोक्ते आन्त्रिकज्वरे स्पष्टः, अपरेषु च केषुचित् सान्निपातिकज्वरेषु॥ २२६॥

अथ विज्वरलक्षणमाह—विगतेति। ननु ज्वरो हि सन्तापलक्षणः सन्तापापगमश्च हालिकादिभिरपि स्पर्शमात्रेण वेद्य, तत् किमनेन विज्वरलक्षणकथनेनेति चेत्। मैवम्। बाह्यसन्तापापगमेऽपि आभ्यन्तरसन्तापस्य बहुधा सूक्ष्मत्वेनावस्थितस्य दर्शनात् स्पष्टावगमार्थमभिधानम्। यत्र यत्र चैवमारोग्ये सन्देहः सम्भवति भिषजा, तत्र तत्रैव वक्ष्यते नैरुज्यलिङ्गमग्रेऽपि, यथा अतीसारादिषु। क्लमः अकृतश्रमस्यापि श्रमानुभवः। सन्तापो दैहिकतापाधिक्यम्। व्यथा मानस सन्तापविशेषः। विमलेन्द्रियम् अनाविलेन्द्रियशक्तिम्। प्रकृतिसत्त्वेन स्वाभाविकवृत्त्या स्थैर्यादिना क्षुत्पिपासादिना च युक्तम्॥ २३०॥

इति—वैद्याव 'स विद्यासागर-सरस्वती-कविराजोपाधिक-
महामहोपाध्याय-स्व० गणनाथ सेन-शर्मणः कृतौ
सिद्धान्तनिदाने ज्वराधिकारः।

---

चतुर्थोऽध्यायः समाप्तः।

सोऽयम्

श्रीमन्नारायणकरुणावतार श्रीकृष्णचैतन्य तनयीकृत-धन्यजनि-

श्रीमद्रघुनन्दनगोस्वामिवंशावतंसस्य

निखिलराढाभूमिसौरभप्रभव श्रीखण्डपुरादिवास्तव्यस्य

प्राच्य प्रतीच्यचिकित्सातन्त्रपारङ्गत श्रीकुञ्जविहारिकविराजपौत्रस्य

विद्याकल्पद्रुमेत्यन्वयनामधेय-सर्वतन्त्रस्वतन्त्र-

वाराणसीभूषण-सर्वपण्डितमान्यचिकित्सक शिरोमणि

श्रीविश्वनाथोपम श्रीविश्वनाथकविराजात्मजस्य

सरस्वती-प्राणाचार्य्य विद्यासागर, एम् ए, एल्-एम् एस् इत्युपाधिकस्य

**महामहोपाध्याय स्व० गणनाथ सेन-शर्मणः**

**नवीनकृतौ सिद्धान्तनिदाने**

प्रथमखण्डम् समाप्तम् ।

॥ श्रीकृष्णचरणार्पणमस्तु ॥